नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवे दिवे।।१।। देवानां भद्रासुमतिर्ऋजूयतान्देवाना ꣳ रातिरभिनो निवर्त्तताम्। देवाना ꣳ सख्यमुपसेदिमा व्वयं देवानऽआयुः प्रतिरन्तु जीवसे ।।२।। तान्पूर्व्वया निविदाहूमहे व्वयं भगम्मित्रमदितिन्दक्षमस्त्रिधम्। अर्य्यमणं वरुण ꣳ सोममश्विना सरस्वती नः सुभगा मयस्करत्।।३।। तन्नो वातोमयो भुवातु भेषजं तन्माता पृथिवी तत्पिता द्यौः। तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना श्रृणुतन्धिष्ण्या युवम्।।४।। तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्भ्धः स्वस्तये।।५।। स्वस्ति नऽ-इन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।६।। पृषदश्वा मरुतः पृश्निमातरः शुभं य्यावानो विदथेषु जग्मयः। अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवाऽअवसाऽऽगमन्निह।।७।। भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गैस्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहि देवहितं यदायुः।।८।। शतमिन्नुशरदो अन्तिदेवा यत्रानश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः।।९।। अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वेदेवाऽअदितिः पञ्चजनाऽ अदितिर्ज्जातमदितिर्ज्जनित्वम्।।१०।। तम्पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुतवाहिरण्यैः। नाकं गृभ्णानाः सुकृतस्य लोके तृतीय पृष्ठेअधिरोचने दिवः ।।११।। आयुष्यं वर्च्चस्य ꣳ रायस्पोषमौद्भिदम्। इद ꣳ हिरण्यं वर्च्चस्य ज्जैत्राया विशतादुमाम्।।१२।। द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व ꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।।१३।। यतो यतः समीहसे ततो नोऽभयङ्कुरु। शन्नः कुरु प्प्रजाभ्योभयन्नः पशुभ्यः।।१४।।

"वा"

स्वस्तिवाचनम् (शान्तिपाठः) :—

ॐ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषाविश्ववेदाः। स्वस्ति नस्तार्क्ष्यो ऽअरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।।१।। पयः पृथिव्यां पयऽओषधीषुपयो दिव्यन्तरिक्षेपयोधाः। पयस्वतीः प्रदिशः सन्तुमह्यम्।।२।। विष्णो रराटमसिविष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्द्ध्रुवोसि वैष्णवमसिविष्णवे त्त्वा।।३।। अग्निर्देवता व्वातोदेवता सूर्य्योदेवता चन्द्रमा

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

देवता व्वसवोदेवता रुद्रादेवतादित्या देवता मरुतोदेवताव्विश्वेदेवादेवता बृहस्पतिर्देवतेन्द्रो देवता व्वरुणो देवता।।४।। द्यौः शान्तिरन्तरिक्ष ꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिब्रह्मशान्तिः सर्व ꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि-।।५।। व्विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रन्तन्न ऽआसुव।।६।। एतन्ते देव सवितुर्यज्ञं प्राहुर्बृहस्पति ब्रह्मणे। तेन यज्ञमवतेन यज्ञपति तेन मामव।।७।। ॐ शान्तिः शान्तिः सुशान्तिर्भवतु। सर्वाऽरिष्ट शान्तिर्भवतु।।

*॥ इति शान्तिपाठः॥*

**नमस्कारम्** (हाथ जोड़ कर सभी देवताओं को नमस्कार करें)

**यजमानः करौबध्वा देवान् मनसा स्मरतु—**

**ॐश्रीमन्महागणाधिपतये नमः।। श्रीलक्ष्मीनारायणाभ्यां नमः।। उमा-महेश्वराभ्यां नमः।। वाणीहिरण्यगर्भाभ्यां नमः।। शचीपुरन्दराभ्यां नमः।। मातापितृचरणकमलेभ्यो नमः।। इष्टदेवताभ्यो नमः।। कुलदेवताभ्यो नमः।। ग्रामदेवताभ्यो नमः।। स्थानदेवताभ्यो नमः।। वास्तुदेवताभ्यो नमः।। सर्वेभ्यो देवेभ्योनमः।। सर्वाभ्यः शक्तिभ्यः नमः।। सर्वेभ्यो ब्राह्मणेभ्यो नमः।। एतत् कर्मप्रधानदेवताभ्यो नमः।। ॐसिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः।।**

**यजमानः सपत्नीकः हस्तयोः पुष्पाणि आदाय** (यजमान पत्नी सहित हाथों में पुष्प व चावल लेकर ध्यान करें)—

**ॐसुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।**
**लम्बोदरश्च विकटो विघ्ननाशो विनायकः।।**
**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।**
**द्वादशैतानि नामानि यः पठेच्छृणुयादपि।।**
**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा।**
**संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते।।**

---

**शास्त्रोक्तञ्च—** गृहकर्मणि ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः।
किञ्च मध्यमावृत्या ते न द्रुता न विलम्बिताः।। *(रेणुः)*
आयुः पुमान्यशः कीर्ति तेजः पुष्टिं श्रियं बलम्।
पशुं सुखं धनं धान्यं प्राप्नुयात्पितृवन्दनात्।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये।।
अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः।
सर्वविघ्नहरस्तस्मै गणाधिपतये नमः।।
सर्व मङ्गलमाङ्गल्ये! शिवे! सर्वार्थसाधिके!।
शरण्ये! त्र्यम्बके गौरि नारायणि नमोस्तु ते।।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम्।
येषां हृदयस्थो भगवान् मङ्गलायतनो हरिः।।
तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव।
विद्याबलं देवबलं तदेव लक्ष्मीपते! तेऽङ्घ्रियुगं स्मरामि।।
लाभस्तेषां जयस्तेषां कुतः तेषां पराजयः।
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः।।
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम।।
अनन्यांश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।
स्मृतेः सकलकल्याणं भाजनं यत्र जायते।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम्।।
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः।
देवा दिशन्तु नः सिद्धिब्रह्मेशानजनार्दनाः।।
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्।।
वक्रतुण्ड! महाकाय! कोटि सूर्यसमप्रभ।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा।।

गुरोर्ध्यानम्—

गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः।।
अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

# अथ सङ्कल्पः

**देवपूजाअधिकारप्राप्तिसङ्कल्पः** —(यजमान पत्नी सहित दाहिने हाथ में रोली, चावल, पुष्प, दूर्वा, जल तथा द्रव्य लेकर संकल्प करें)

**यजमानः सपत्नीकः स्वदक्षिणहस्ते गन्धाक्षतपुष्पदूर्वाजलद्रव्यञ्चादाय—**

**ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया-प्रवर्तमानस्य अद्य ब्रह्मणोऽह्नि द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वत-मन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बुद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गते ब्रह्मावर्तस्य अमुकपवित्रक्षेत्रे अमुक-राज्याऽन्तर्गत अमुकमण्डलान्तर्गत अमुकजनपदे अमुकनगरे वा ग्रामे श्रीगङ्गायमुनयोः अमुक दिक्‌भागे अमुकनामसंवत्सरे देवब्राह्मणानां सन्निधौ श्रीमन्नृपतिवीर विक्रमादित्य समयपरिमितौ अमुकविक्रामाब्दे मासानां मासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकायने अमुकऋतौ अमुकराशिस्थितेश्रीसूर्ये अमुकस्थितौ देवगुरौ शेषेषु ग्रहेषु यथा यथा स्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां अमुक-गौत्रोत्पन्नोऽहं अमुकशर्माऽहं करिष्यमाण अमुककर्मणि अधिकारप्राप्त्यर्थं कायिकवाचिकमानसिकसांसर्गिकदोषोपशमनार्थं शरीरशुद्ध्यर्थं च गोनिष्क्रयीभूतं द्रव्यं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे।**

**सकाम सङ्कल्पः —**

**ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया-प्रवर्तमानस्य अद्य ब्रह्मणोऽह्नि द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वत-मन्वन्तरे अष्टाविंशतितमे युगे कलियुगे कलिप्रथमचरणे भूर्लोके जम्बुद्वीपे भारतवर्षे भरतखण्डे आर्यावर्तान्तर्गति ब्रह्मावर्तस्य अमुकपवित्रक्षेत्रे अमुक-राज्याऽन्तर्गत अमुकमण्डलान्तर्गत अमुकजनपदे अमुकनगरे वा ग्रामे श्रीगङ्गायमुनयोः अमुक दिक्‌भागे अमुकनामसंवत्सरे देवब्राह्मणानां सन्निधौ श्रीमन्नृपतिवीर विक्रमादित्य समयपरिमितौ अमुकविक्रामाब्दे मासानां मासोत्तमे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकायने अमुकऋतौ अमुकराशिस्थितेश्रीसूर्ये अमुकस्थितौ देवगुरौ शेषेषु ग्रहेषु यथा यथा स्थानस्थितेषु सत्सु एवं गुणविशेषणविशिष्टायां अमुकगौत्रोत्पन्नोऽहं अमुकशर्माऽहं** (वर्माऽहं दासोऽहं गुप्तोऽहं) **सपत्नीकोऽहं**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**सपरिवारोऽहं सकुटुम्बबन्धु बान्धवोऽहं ममात्मनः श्रुतिस्मृतिलोकोक्त पुण्यफलावाप्त्यर्थम् अमुकदेवस्य प्रसादात् मम ऐश्वर्याभिवृद्ध्यर्थं अप्राप्तलक्ष्मिप्राप्त्यर्थं प्राप्तलक्ष्म्याः चिरकाल संरक्षणार्थं अष्टलक्ष्म्यः** (आद्यलक्ष्मी, विद्यालक्ष्मी, सौभाग्य लक्ष्मी, अमृतलक्ष्मी, कामलक्ष्मी, सत्यलक्ष्मी, भोगलक्ष्मी, योगलक्ष्मी) **प्राप्त्यर्थं सकलमनैप्सितकामनासंसिद्ध्यर्थं सर्वाभीष्ट** (लोके वा राजसभायां, राजद्वारे वा सर्वत्र यशोविजयसम्मानप्रतिष्ठालाभादि) **प्राप्त्यर्थं मम प्रचलितव्यापारे बहुधनलाभार्थं समस्त भयाधिव्याधिजरापीड़ामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थं तथा च मम जन्मराशेः सकासाद्ये नामराशेः सकासाद्ये वा जन्मकुण्डल्यां**(लग्नकुण्डल्याम्, चन्द्रकुण्डल्यां) **केचित् विरुद्ध चतुर्थाष्टं द्वादशस्थानस्थिताः क्रूरग्रहाः अनिष्टकारकग्रहाणां महादशा** (अन्तर्दशा, प्रत्यन्तरदशा, सूक्ष्मदशा, प्राणदशा मुग्धादशा गोचरदशा, मासदशा, कालसर्पयोग, दुषितयोग वा) **मध्य कस्यांचित् दशायाम् सूचितं सूचयिष्यमाणं जनितं जनिष्यमाणं च यत् सर्वाऽरिष्टं तद्विनाशद्वारा सर्वदा सर्वेग्रहाः तृतीय एकादशस्थानस्थितवत् शुभफलप्राप्त्यर्थं मम गृहे पुत्रपौत्रादिसन्ततेरविच्छिन्नाभिवृद्ध्यर्थं आधिदैविक आधिभौतिक आध्यात्मिकत्रिविधतापोपसमनार्थं कायिकवाचिकमानसिकसांसर्गिक सर्वविधपापोपसमनार्थं मम गृहे व्यापारे वा प्रारब्धकृत, पथ्यापथ्यदेवमानवकृत, शत्रुभूतप्रेतपिशाचमारिगणडाकिनीशाकिन्यादि कृत, मन्त्र-तन्त्र-यन्त्रादिकृत सर्वेआदिव्याधिशोकभयविघ्नबाधा शमनार्थपूर्वकं धर्मार्थकाममोक्षफलाऽवाप्त्यर्थं अमुकदेवं देवीं वा प्रीत्यर्थं, प्रसन्नतार्थं शान्त्यर्थं वा जपं पूजाञ्च ब्राह्मण** (ब्राह्मणैः) **द्वारा कारयिष्ये। तदङ्गत्वेन निर्विघ्नता सिद्ध्यर्थं आदौ गणपत्यादि देवानां पूजनं करिष्ये।।**

*।। इति सङ्कल्पः।।*



---

**शास्त्रोक्तञ्च—**

संकल्पमूलः कामो वै यज्ञाः संकल्पसम्भवाः।
व्रतानियमधर्माश्च सर्वे संकल्पजाः स्मृता।। *(मनुस्मृति)*

संकल्पेन विनाकर्म यत्किञ्चित्कुरुते नरः।
फलं चाप्यल्पकंतस्य धर्मस्यार्द्ध क्षयो भवेत्।।
संकीर्त्य मासपक्षादीन् निमित्तानितथैव च।
इदं कर्म करिष्येऽहमिति संकल्पमाचरेत्।। ***(संस्कारभास्करे)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

# अथ अग्न्युत्तारणम्

सङ्कल्प —

देशकालौ संकीर्त्य अस्याः स्वर्णमय्याः वा रजतमय्याः अमुकदेव-प्रतिमायाः घटनादिदोषपरिहारार्थं देवतासान्निध्यार्थञ्च अग्न्युत्तारणपूर्वकं चलां वा अचलां वा प्राणप्रतिष्ठां करिष्ये।

अग्न्युतारणम्—मूर्तिं पात्रे निधाय घृतेनाभ्यज्य उपरिदुग्धमिश्रितजलधारां पातयेत्। (मूर्ति को पात्र में लेकर घृत लगाकर उपर दुग्धजल धारा करें)

तत्र मन्त्राः— ॐ समुद्रस्यत्त्वावकयाग्ग्नेपरिव्ययामसि। पावकोऽअस्मभ्य ꣳ शिवो भव।।१।। हिमस्यत्वा जरायुणाग्ग्ने परिव्ययामसि पावकोऽअस्मभ्य ꣳ शिवोभव।।२।। उपज्ज्मनुपवेतसेव्वतरनदीष्वा। अग्नेपित्तमपामसिमण्डूकिताभिरागहिसेमन्नो यज्ञं पावकवर्ण्णं ꣳ शिवंकृधि।।३।। उपामिदन्न्ययन ꣳ समुद्रस्य निवेशनम्। अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्य ꣳ शिवोभव ।।४।। अग्नेपावक रोचिषामन्द्रयादेव जिह्वया। आ देवान् वक्षियक्षिच।।५।। सनः पावक दीदिवोग्रेदेवाँ२ ऽइहाव। उपयज्ञ ꣳ हविश्चनः।।६।। पावकयायश्चितयन्त्याकृपाक्षामन्नुरुच ऽउषसो नुभानुना। तूर्व्वन्नयामन्नेतशस्यनूरणऽआयो घृणेन त्ततृषाणोऽअजरः।।७।। नमस्ते हरसेशोचिषेनमस्तेऽअस्त्वर्च्चिषें। अन्याँस्तेऽअस्म्मत्तपन्तुहेतयः पावको अस्मभ्य ꣳ शिवोभव।।८।। येदेवा देवानां यज्ञियायज्ञियाना ꣳ संवत्त्सरीणमुपभागमासते। अहुता दोहविषो यज्ञेऽअस्मिन्त्स्यं पिबन्तु मधुनो घृतस्य।।९।। प्राणदाऽअपानदा व्यानदा व्वर्चोदा व्वरिवोदाः। अन्यास्तेऽअस्म्मतपन्तु हेतयः पावकोऽअस्म्मभ्य ꣳ शिवोभव।।१०।।

।। इत्युग्न्युत्तारणम् ।।

# अथ प्राणप्रतिष्ठा

विनियोगः—ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्माविष्णुमहेश्वराः ऋषयः ऋग्यजुः सामानि छन्दांसि क्रियामयवपुः प्राणाख्या देवताः आं बीजं ह्रीं शक्तिः क्रौं कीलकं अस्य अमुकदेवतानूतनमूर्तौ प्राणप्रतिष्ठापने विनियोगः।

ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हों हँसः। अस्य अमुकदेव प्रतिमायाः प्राणा इह प्राणाः।।

ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हों हँसः। अस्य अमुकदेव

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**प्रतिमायाः जीव इह स्थितः।।**

**ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हों हँसः। अस्य अमुकदेव प्रतिमायाः सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायुपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा।।**

**ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्य्यज्ञमिमम्तनो त्वरिष्टं यज्ञ ६ समिमं दधातु विश्वेदेवासऽइहमादयन्तामों- ३ प्रतिष्ठ।।**

**ॐ एषवै प्रतिष्ठानाम यज्ञोयत्रै तेन यज्ञेन यज्ञन्तेन यजन्ते सर्वमेव प्रतिष्ठितं भवति।।** (प्रतिमा के हृदय पर अंगुठा रखते हुये उच्चारण करें)

**अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च।**
**अस्यै देवत्वमर्चायै मामहेति च कश्चन।।**

(इसके बाद पन्द्रह बार प्रणव का उच्चारण करे) **ततः षोडशोपचारैः पूजनं कुर्यात्।**

*।। इति प्राण प्रतिष्ठा ।।*



## अथ पञ्चोपचारैः (वैदिक)

**।।१।। गंधम्—**

**ॐ गन्धद्वारां दुराधर्षां नित्य पुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहो पह्वयेश्रियम्।।**

**।।२।। पुष्पम्—**

**ॐ ओषधीः प्रतिमोद्दध्वं पुष्पवतीः प्रसूवरीः अश्श्वाऽइवसजित्वरी-र्व्वीरुधः पारयिष्णवः।।**

**।।३।। धूपम्—**

**ॐ धूरसि धूर्व्व धूर्वन्तं धूर्व्व तं योऽस्मान् धूर्व्वति तं धूर्व्व यं वयं धूर्वामः। देवानामसि वह्नितम ६ सस्निनतमं पप्रितमं जुष्टतमं देवहूतमम्।।**

**।।४।। दीपम्—**

**ॐ चंद्रमा मनसो जातश्च्चक्षोः सूर्य्योऽअजायत श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत।।**

---

**शास्त्रोक्तञ्च—** गन्धपुष्पे धूपदीपौ नैवेद्य इति पञ्चकम्।
पंचोपचारमाख्यातं पूजने तत्व बुधैः।। (कर्म्मप्रदीपे)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

॥५॥ **नैवेद्यं—**

**ॐ नाभ्याऽआसीदन्तरिक्ष ँ शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्॥**

## अथ षोडशोपचारैः (वैदिक)

**प्रतिष्ठापनम्**—(प्रष्ठिार्थ पुष्प छोड़े)

**ॐमनो जूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्य्यज्ञमिमं तन्नो त्वरिष्टं य्यज्ञ ँ समिमं दधातु। विश्वेदेवासऽइह मादयन्तामों३ प्रतिष्ठ।** प्रष्ठिार्थं पुष्पं समर्पयामि।

**आसनम्**—(आसन के लिए पुष्प छोड़े)

**ॐपुरुषऽएवेद ँ सर्वं य्यद्भूतं य्यच्चभाव्यम्। उतामृतत्त्वस्येशानो यदन्नेनातिरोहति॥** आसन्नार्थं पुष्पं समर्पयामि।

॥१॥ **पाद्यम्**—(पाद्य के लिए जल अर्पण करें)

**ॐएतावानस्य महिमातो ज्ज्यायाँश्च पूरुषः। पादोस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि॥** पाद्यार्थं जलं समर्पयामि।

॥२॥ **अर्घ्यम्**—(चंदन, अक्षत, पुष्प, दुर्वायुक्त जल से अर्घ्ये प्रदान करें)

**ॐत्रिपादूर्ध्वऽउदैत्पुरुषः पादोऽस्येहा भवत्पुनः। ततो विष्ष्वङ्व्यक्क्रामत्साशनानशनेऽअभि॥** अघ्यार्थं गन्धोदकं समर्पयामि।

॥३॥ **आचमनीयम्**—(आचमन के लिए जल अर्पण करें)

**ॐततो विराडजायत व्विराजो ऽधिपूरुषः। स जातोऽअत्यरिच्च्यतपश्चाद्भूमि मथोपुरः॥** आचमनीयार्थ सुवासितं जलं समर्पयामि।

॥४॥ **स्नानम्**—(स्नान के लिए जल अर्पण करें)

**ॐतस्माद्यज्ञात्त्सर्व्वहुतः सम्भृतं पृषदाज्यम्। पशूँस्तांश्च्चक्क्रे वायव्यानारण्ण्या ग्राम्याश्च्च ये॥** स्नानार्थं जलं समर्पयामि।

**पञ्चामृतस्नानम्**—(स्नान के लिए पंचामृत अर्पण करें)

**ॐपञ्चनद्यः सरस्वतीमपियन्ति सस्त्रोतसः सरस्वती तु पञ्चधा सो देशे भवत्सरित्॥** मल्लापहारे पंचामृतस्नानं समर्पयामि।

---

**शास्त्रोक्तञ्च—** हस्ताभ्यामञ्जलिं वध्वाऽनामिकामूलपर्वणि।
अंगुष्टौनिक्षिपेत्सेयं मुद्रात्वावाहनीमता।
अधोमुखीत्वियं चैव स्थापनौति निगद्यते॥ ***(प्रयोगपारिजात)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**विशेषस्नानम्**—

(क) **पयस्नानम्**—(स्नान के लिए दुग्ध अर्पण करें )

**ॐ पयः पृथिव्यां पयऽओषधीषुपयो दिव्यंतरिक्षे पयोधाः। पयस्वती प्रदिशः सन्तुमह्यम्।।** पयस्नानं समर्पयामि।

(ख) **दधिस्नानम्**—(स्नान के लिए दही अर्पण करें)

**ॐ दधिक्राब्णो अकारिषंजिष्णोरश्वस्य वाजिनः। सुरभिनो मुखा-करत्प्रणआयू ७ षितारिषत्।।** दधिस्नानं समर्पयामि।

(ग) **घृतस्नानम्**—(स्नान के लिए धृत अर्पण करें)

**ॐ घृतं घृतपावानः पिबत व्वसां व्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिशऽआदिशोविदिशऽउद्दिशो दिग्गभ्यः स्वाहा।।** घृतस्नानं समर्पयामि।

(घ) **मधुस्नानम्**—(स्नान के लिए शहद अर्पण करें)

**ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्न्नः सन्त्वोषधीः मधु नक्तमुतोषसो मधुमत्पार्थिव ७ रजः मधु द्यौरस्तुनः पिता मधुमान्नो-वनस्पतिर्मधुमाँ३ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः।।** मधुस्नानं समर्पयामि।

(ङ) **शर्करास्नानम्**—(स्नान के लिए शर्करा अर्पण करें)

**ॐ अपा ७ रसमुद्वयस ७ सूर्ये सन्त ७ समाहितं। अपा ७ रसस्य यो रसस्तंवो गृह्णाम्युत्तमुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्।।** शर्करास्नानं समपयामि।

(च) **गन्धोदकस्नानम्** —(कुमकुम व चन्दन मिले हुये जल से स्नान करावें)

**ॐ अ ७ शुना ते अ ७ शुः पृच्यतां परुषा परुः। गन्धस्ते सोममवतु मदाय रसो ऽअच्युतः।।** गन्धोदकस्नानं समर्पयामि।

(छ) **शुद्धोदकस्नानम्** — (शुद्ध जल से स्नान करावें)

**ॐशुद्धवालः सर्वशुद्धवालो मणिवालस्तऽआश्विनाः श्येतः श्येताक्षो रुणस्ते रुद्राय पशुपतये कर्ण्णा यामाऽअवलिप्ता रौद्रानभोरूपाः पार्ज्जन्याः।।** शुद्धोदकस्नानं समर्पयामि।

।।५।। **अधोवस्त्रम्** —(वस्त्र अर्पण करें)

**ॐ सुजातो ज्योतिषा सह शर्म्म व्यरूथमाऽसदत्स्वः। वासोऽअग्ने व्विश्वरूप ७ सं व्ययस्व विभावसो।।** वस्त्रं समर्पयामि।

वस्त्रान्ते आचमनीयं जलं समर्पयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।६।। **यज्ञोपवीतम्** —(यज्ञोपवीत अर्पण करें)

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनऽआवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः।।** यज्ञोपवीतं समर्पयामि।

यज्ञोपवितान्ते आचमनीयं जलं समर्पयामि।

**उपवस्त्रम्** —(कंचुकी वस्त्र अर्पण करें तथा आचमन करवायें)

**ॐ युवा सुवासाः परिवीतऽआगात् स उऽश्रेयान् भवति जायमानः। तं धीरासः कवयऽउन्नयन्ति स्वाध्यो३ मनसा देवयन्तः।।** उपवस्त्रं समर्पयामि।

उपवस्त्रान्ते आचमनीयं जलं समर्पयामि।

।।७।। **गन्धम्** —(कुमकुम का तिलक करें)

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।** गन्धानुलेपनं समर्पयामि।

**चन्दनम्** —(केसर मिश्रित चन्दन का तिलक करें)

**ॐत्वां गन्धर्व्वा अखनस्त्वाँमिन्द्रस्त्वाँ बृहस्पतिः। त्वामोषधे सोमो राजा-विद्वान् यक्ष्मादमुच्च्यत।।** किंसुकामिश्रितचन्दनं समर्पयामि।

**अक्षतम्**—(तिलक पर चावल लगायें)

**ॐअक्षन्नमीमदन्त ह्यवप्रिया अधूषत। अस्तोषत स्वभानवो विप्रान-विष्ठया मती योजान्विन्द्र ते हरी।।** अक्षतान् समर्पयामि।

।।८।। **पुष्पाणिः**—(पुष्प तथा पुष्पमाला अर्पण करें)

**ॐओषधीः प्रतिमोद्ध्वं पुष्पवतीः प्रसूवरीः। अश्वाऽइव सजित्वरी-र्वीरुधः पारयिष्णवः।।** पुष्पाणि समर्पयामि।

**दूर्वा**— (दूर्वा के अंकुर अर्पण करें)

**ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्प्परि। एवानो दूर्वे प्रतनुसहस्त्रेण शतेन च।।** दूर्वाङ्कुरान् समर्पयामि।

---

**शास्त्रोक्तञ्च–** मध्यमाऽनामिकामध्ये पुष्पं संगृह्य पूजयेत्।
अंगुष्ठतर्जनीभ्यां तु निर्माल्यमपनोदयेत्।। ***(कालिकापुराणे)***
पत्रं वा यदि वा पुष्पं फलं नेष्ठमधोमुखम्।
यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम्।। ***(पटलसंग्रहे)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**बिल्वपत्रम्** —(बिल्वपत्र अर्पण करें)

**ॐ नमो विल्मिने च कवचिने च नमो व्वर्म्मिणे च बरूथिने च नमः श्रुताय च श्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमो धृष्ष्णवे।।**

बिल्वपत्रं समर्पयामि।

**अबीरगुलालम्** —(अबीर और गुलाल अर्पण करें)

**ॐ अहिरिव भोगैः पर्य्येति बाहुंयाया हेतिं परिबाधमानः। हस्तग्घ्नो व्विश्वा व्वयुनानि व्विद्वान् पुमान् पुमा ँ सम्परिपातु व्विश्वतः।।**

नानापरिमलद्रव्याणि अबीरं गुलालं च समर्पयामि।

**सिन्दूरम्**—(सिन्दूर अर्पण करें)

**ॐ सिन्धोरिव प्राध्वने शूघनासो वात प्प्रमियः पतयन्ति यह्वाः। घृतस्य धारा ऽअरुषो न व्वाजी काष्ट्ठा भिन्दन्नूर्म्मिभिः पिन्न्वमानः।।**

सौभाग्यद्रव्याणि (सिन्दूरं) समर्पयामि।

**सुगन्धिद्रव्यम्**—(सुगन्धित अर्पण करें)

**ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनं उर्व्वारुकमिव बन्धनान्मृत्यो-र्म्मुक्षीय मामृतात्।।** सुगन्धितद्रव्यं समर्पयामि।

।।९।। **धूपम्**—(धूप अर्पण करें)

**ॐ धूरसि धूर्व्व धूर्वन्तं धूर्व्वतंयोऽस्मान् धूर्व्वति तं धूर्व्व यं वयं धूर्वामः। देवानामसि वह्नित ँ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्।।** धूपं आघ्रापयामि।

।।१०।। **दीपम्**—(दीपक दिखावें तथा हाथों का प्रक्षालन करें)

**ॐ चंद्रमा मनसो जातश्च्चक्षोः सूर्य्योऽअजायत श्रोत्राद्वायुश्च प्राणश्च मुखा दग्निरजायत।** प्रत्यक्षदीपं दर्शयामि। हस्तौ प्रक्षाल्य।

।।११।। **नैवेद्यम्** —(नैवेद्य अर्पण करें तथा ग्रासमुद्रा दिखावें)

**ॐ नाभ्याऽआसीदन्तरिक्ष ँ शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमि र्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्।।** नैवेद्यं निवेदयामि।

धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्राः प्रदर्शयेत्।

---

**शास्त्रोक्तञ्च**—

नैवेद्यं दक्षिणे भागे पुरतो वा न पृष्ठतः।
भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पंचकम्।। ***(गौतमीये)***

स्नाने वस्त्रे च नैवेद्य दद्यादाचमनं तथा।। ***(संस्कारमयूखे)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

॥१२॥ **आचमनीयम्**-(आचमन के लिए सुवासित जल अर्पण करें)

**ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनं उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीयमामृतात्।। ॐ प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। उदानाय स्वाहा। समानाय स्वाहा।** आचमनीयं समर्पयामि।

**करोद्वर्तनकम्** —(हाथों का प्रक्षालन के लिए जल अर्पण करें)

**ॐ अ ६ शुना ते अ ६ शुः पृच्यतां परुषा परुः। गंधस्ते सोममवतु मदाय रसो ऽअच्युतः।।** करोद्वर्तनं समर्पयामि।

॥१३॥ **ऋतुफलम्**—(सामयिक फल अर्पण करें)

**ॐ याः फलिनीर्य्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूतास्तानो मुञ्चन्त्व ६ हसः।।** अखण्ड ऋतुफलानि समर्पयामि।

ऋतुफलान्ते आचमनीयं समर्पयामि।

॥१४॥ **ताम्बूलम्**—(ताम्बूल अर्पण करें)

**ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। व्वसन्तो ऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः।।** मुखवासार्थं ताम्बूलं समर्पयामि।

॥१५॥ **दक्षिणाद्रव्यम्**—(दक्षिणाद्रव्य अर्पण करें)

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।** द्रव्यदक्षिणां समर्पयामि।

॥१६॥ **कर्पूरातिक्यम्**—(आरती दिखावें)

**ॐ इद ६ हविः प्प्रजननम्मेऽअस्तु दशवीर ६ सर्व्वगण ६ स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्न्य भयशनिः अग्निः प्रजाम्बहुलाम्मे करोत्वन्नम्पयोरेतो ऽअस्मासुधत्त।।**

**ॐ आ रात्रि पार्थिव ६ रजः पितुरप्रायि धामभिः। दिवः सदा ७ सि बृहती वि तिष्ठस ऽआ त्त्वेषं वर्तते तमः।।**

ॐभूर्भुवः स्वः अमुकदेवाय कर्पूरार्तिक्यं प्रदर्शयामि।

---

**शास्त्रोक्तश्च**— पंकजं पंचरात्रं स्याद्दशरात्रं च बिल्वजम्।
एकादशाहं तुलसी नैव पर्य्युषिता भवेत्।। ***(विष्णुधर्मोत्तरे)***

आवाहनमासनं पाद्यमर्घमाचमनीयकम्।
स्नानं वस्त्रोपवीतं गन्धामाल्यान्यनुक्रमात्।।
धूपं दीपं च नैवेद्यं ताम्बूलं च प्रदक्षिणा।
पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश।।
फलेन सफलावाप्तिः साङ्गता दक्षिणार्पमिति।। ***(कर्मप्रदीपे जाबालिरपि)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

## अथ पुष्पाञ्जलि

ॐ यज्ञेन यज्ञमयजन्त देवा स्तानि धर्माणि प्रथमान्यासन्। तेहनाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ।। ॐराजाधिराजायप्रसह्य साहिने नमो व्वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु।। कुबेराय वैश्रवणाय महाराजाय नमः।।

ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषान्तादापर्धात् पृथिव्यै-समुद्रपर्यन्ताया एकराडिति तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्त स्यावसन् गृहे। आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति।।

ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन् देव ऽएकः।।

सेवन्तिकावकुलचम्पकपाटलाब्जैः,
पुन्नागजातिकरवीररसालपुष्पैः ।
बिल्वप्रवालतुलसीदलमञ्जरीभिः,
त्वं पूजयामि जगदीश्वर मे प्रसीद।।

नाना सुगन्धिपुष्पाणि यथा कालोद्भवानि च।
पुष्पाञ्जलिर्मया दत्ता गृहाण परमेश्वरः।।

*।। इति पुष्पाञ्जलिः।।*

## अथ षोडशोपचारैः (पौराणिक)

आवाहनम् —

ॐ आगच्छ देव देवेश स्व स्थानात् परमेश्वर।
अहं पूजां करिष्यामि सदा त्वं सम्मुखो भव।।

प्रतिष्ठापनम् —

ॐ अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाश्चरन्तु च।
अस्यै देवत्त्वमर्चायै मामहेति च कश्चन।।

आसनम् —

ॐनाना रत्न समायुक्तं कार्तस्वरविभूषितम्।
आसनं देव देवेश प्रीत्यर्थं प्रतिगृह्यताम्।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।१।। पाद्यम् —

ॐ यदत्र क्लेशसंपर्कात्परमानन्द विग्रहम्।
तस्मैते चरणाब्जाय पाद्यं प्रतिगृह्यताम्।।

।।२।। अर्घ्यम् —

ॐ तापत्रय हरं दिव्यं परमानन्दलक्षणम्।
तापत्रय विमोक्षाय तवार्घ्यं कल्पयाम्यहम्।।

।।३।। आचमनीयम् —

ॐ वेदानामपि वैद्याय देवानामपिदेवात्मने।
आचमनकल्पयामीश शुद्धानां शुद्धि हेतवे।।

।।४।। स्नानम् —

ॐ गङ्गा सरस्वती रेवा पयोष्णी नर्मदा जलैः।
स्नानार्थं च मया देव भक्त्यार्थं प्रतिगृह्यताम्।।

पंचामृतस्नानम् —

ॐ पयोदधि घृतं चैव शर्करामधुसंयुतम्।
स्नानार्थं च मया देव भक्त्यार्थं प्रतिगृह्यताम्।।
पञ्चामृतं मयानीतं पयोदधि घृतं मधु।
शर्करया समायुक्तं स्नानार्थं प्रतिगृह्यताम्।।

विशेषपञ्चस्नानम् (क) पयस्नानम्—

ॐ कामधेनुसमुद्भूतं सर्वेषां जीवनं परम्।
पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम्।।

(ख) दधिस्नानाम्—

ॐ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभं।
दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम्।।

---

शास्त्रोक्तञ्च— पौष्पं दारुमयं वास्त्रमाक्षतं कौशतेजसम्।
षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकम्।।
द्रव्याभावे प्रदातव्या क्षालितास्तण्डुलाः शुभाः।
उपचारेषु सर्वेषु यत्किञ्चिद्दुर्लभं भवेत्।
तत्सर्व मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत्।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

(ग) घृतस्नानाम्—

ॐ नवनीतसमुत्पन्नं सर्वसंतोष कारकम्।
घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम्।।

(घ) मधुस्नानम्—

ॐ पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु।
तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्।।

(ड़) शर्करास्नानम्—

ॐइक्षुरससमुद्भूत शर्करापुष्टिकारिका।
मलापहारिकादिव्या स्नानार्थं प्रतिगृह्यताम्।।

(च) गंधोदकस्नानम्—

ॐमलयाचलसम्भूतं चन्दनेन विनिःसृतम्।
इदं गंधोदकस्नानं कुंकुमाक्तं च गृह्यताम्।।

(छ) शुद्धोदकस्नानम्—

ॐगङ्गा च यमुना चैव गौदावरी सरस्वती।
जलोत्तमं मयानीतं स्नानार्थं प्रतिगृह्यताम्।।

।।५।। वस्त्रम् —

ॐसर्वभूषाधिके सौम्ये लोकलज्जा निवारणे।
मयोपपादितेतुभ्यं वाससी प्रतिगृह्यताम्।।

।।६।। यज्ञोपवीतम् —

ॐ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम्।
उपवीतं मया दत्तं गृहाण परमेश्वर!।।

उपवस्त्रम्—

ॐ कौंसुभपट्ट वस्त्रं च उपवस्त्रं धरं प्रभो।
पूजां कुरुष्व मे देव वस्त्रेण प्रतिगृह्यताम्।।

गंधम्—

ॐश्रीखण्डं चन्दनं दिव्यं गंधाढ्यं सुमनोहरम्।
विलेपनं सुरश्रेष्ठ! चन्दनं प्रतिगृह्यताम्।।

अक्षतम्—

ॐअक्षताश्च सुरश्रेष्ठ कुंकुमाक्ता सुशोभिता।
मया निवेदिता भक्त्या गृहाण परमेश्वर!।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

पुष्पाणि—

ॐमाल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो।
मयानीतानि पुष्पाणि प्रीत्यर्थं प्रतिगृह्यताम्।।
नानासुगन्धसंयुक्तं नानापुष्पसमन्वितम्।
पूजायां कुरु मे देव पुष्पोऽयं प्रतिगृह्यताम्।।

दूर्वा—

ॐदूर्वांकुरान् सुहरितानमृतान्मङ्गलप्रदान्।
आनीतांस्तव पूजार्थं गृहाण परमेश्वर!।।

बिल्वपत्रम्—

ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम्।
त्रिजन्मपापसंहारं एकबिल्वं देवार्पणम्।।

कुंकुमम्—

ॐकुंकुमं कामनादिव्यं कामनाकामसम्भवम्।
कुंकुमेनार्चितोदेव! ततः शान्तिं प्रयच्छ मे।।

सिन्दूरम्—

ॐसिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्धनम्।
शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम्।।

अबीरं च गुलालं च—

ॐ अबीरं च गुलालं च चोवा चन्दनमेव च।
अबीरेणार्चितोदेव! ततः शान्तिं प्रयच्छ में।।

नानापरिमलद्रव्याणि (सौभाग्यद्रव्याणि)—

ॐश्वेतचूर्णं रक्तचूर्णं हरिद्राकुंकुमान्वितैः।
नानापरिमलद्रव्यैः प्रीयतां परमेश्वरः।।

सुगन्धिद्रव्यम्—

ॐ चम्पकाशोकवकुलमालतीमोगरादिभिः।
वासितं स्निग्धताहेतु तेलं चारु प्रगृह्यताम्।।

धूपम्—

ॐ वनस्पतिरसोद्भूतो गन्धाढ्योगन्ध उत्तमः।
आघ्रेयः सर्वदेवानां धूपोऽयम् प्रतिगृह्यताम्।।

दीपम्—

ॐआंज्यञ्चवर्ति संयुक्तं वह्निनायोजितं मया।
दीपं गृहाणदेवेश त्रैलोक्यतिमिरापहम्।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

नैवेद्यम्—

ॐ शर्कराखण्डखाद्यादि दधिक्षीरघृतादिभिः।
आहारैर्भक्ष्यभौज्यैश्च नैवेद्यं प्रतिगृह्यताम्।।

आचमनीयम्—

ॐ अतितृप्तिकरं तोयं सुगन्धिं च पिबेच्छया।
त्वयि तृप्तिजगततृप्तिः नित्यतृप्ति च महात्मने।।

अखण्डऋतुफलम्—

ॐ इदं फलं मया देव स्थापितं पुरतस्तव।
तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।।

ताम्बूलम्—

ॐ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्।
ऐलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।।

द्रव्यं दक्षिणाम्—

ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे।।

कर्पूरार्तिक्यम्—

ॐ कदलीगर्भसम्भूतं कर्पूरं च प्रदीपितम्।
आरार्तिक्यमहं कुर्वे पश्य मे वरदोभव।।

*।। इति षोडशोपचारैः ।।*



# अथ श्रीगणेशाम्बिकेपूजनम्



**यजमानः दक्षिणहस्ते पुष्पाक्षताञ्चादाय-**

**आवाहनम्** —(यजमान दाहिने हाथ में पुष्प व चावल लेकर आवाहन करें)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ गणानां त्वा गणपति ꣳ हवामहे प्रियाणां त्वा प्रियपति ꣳ हवामहे निधीनां त्वा निधिपति ꣳ हवामहे व्वसो मम। आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्।।

ॐ अम्बेअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्श्वकः सुभद्रिकां काम्पील वासिनीम्।।

ध्यानम् —

ॐ श्वेताङ्गं श्वेत वस्त्रं सित कुसुमगणैः पूजितं श्वेत गन्धैः,
क्षीराब्धौ रत्नदीपैः सुरतरु विमलैः रत्न सिंहासनस्थम्।
दोर्भिः पाशाङ्कुशेष्टाभय धृति विशदैः चन्द्र मौलिं त्रिनेत्रम्,
ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम्।।
ॐहेमाद्रितनयां देवीं वरदां शङ्कर प्रियाम्।
लम्बोदरस्य जननीं तां त्वां गौरीं ध्यायाम्यहम्।।

ॐ भूर्भुवः स्वः गणेशाम्बिके! इहागच्छ इहतिष्ठ सिद्धिबुद्धि सहिताय सवाहनाय सायुधाय नमः। आवाहयामि स्थापयामि पूजयामि।

ॐ मनोजूतीतिमन्त्रस्य प्रतिष्ठापूर्वकं पुष्पासनादि षोडशोपचारैः सम्पूज्य।

विशेषार्घ्यम् —पात्र में जल, गन्ध, अक्षत, सुपारी, पुष्प, द्रव्य, दूर्वा, लेकर अवनीकृत जानुमण्डल से गणपतिजी को विशेषार्घ्य अपर्ण करें।

ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलाक्य रक्षक।
भक्तानामभयं कर्ता त्राता भव भवार्णवात्।।
द्वैमातुरकृपासिन्धो षाणमातुराग्रजः प्रभो।
वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद।।
अनेन सफलार्घ्येण फलदोऽस्तु सदा मम ।
गणेशाम्बिके विशेषार्घ्यं समर्पयामि।।

प्रार्थना —

गणाधि देवताग्रजं उमामहेश वत्सलम्,
रिद्धि सिद्धि दायिनं अविघ्न रूपकारकम्।
सुमङ्गल प्रदायिनं गजस्य तुण्डमाननम्,
शिवे भवानि वन्दितं गणेश देवतां भजे।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**विघ्नेश्वराय वरदाय सुरप्रियाय,**
**लम्बोदराय सकलाय जगद्धिताय।**
**नागाननाय श्रुति यज्ञ विभूषिताय,**
**गौरी सुताय गणनाथ नमो नमस्ते।।**
**भक्तार्ति नाशन पराय गणेश्वराय,**
**सर्वेश्वराय शुभदाय सुरेश्वराय।**
**विद्याधराय विकटाय च वामनाय,**
**भक्त प्रसन्न वरदाय नमो नमस्ते।।**
**सर्व मङ्गलमाङ्गल्ये शिवे सर्वार्थ साधिके।**
**शरण्ये त्र्यम्बिके गौरि नारायणि नमोऽस्तुते।।**

अनेन कृतेन पूजनेन गणेशाम्बिके प्रीयेताम् न मम।

*।। इति श्रीगणेशाम्बिकेपूजनम् ।।*

# अथ श्रीमोदादिषडविनायकपूजनम्

**यजमानः स्वहस्ते पुष्पाक्षताञ्चादाय**(यजमान अपने हाथ में पुष्पाक्षत लेकर आवाहन करें)—

।।१।। **मोदाय—**

**ॐ भूर्भुवः स्वः मोद! इहागच्छ इह तिष्ठ मोदाय नमः मोदमावाह्यामि स्थापयामि।**

---

**शास्त्रोक्तञ्च–** देवतादौ यदा मोहाद्गणेशो न च पूज्यते।
तदा पूजाफलं हन्ति विघ्नराजो गणधिपः।। ***(भविष्यपुराणे)***
आदौ विनायकः पूज्य चान्ते तु कुलदेवता। ***(संस्कारभास्करे)***
नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम्।
न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम्।।
उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यें सदा बुधैः।
फलं च कृमिसंयुक्तं प्रयत्नात्तद्विवर्जयेत्।। ***(ज्ञानमालायाम्)***
अक्षतैर्नार्चयेद् विष्णुं न तुलस्या विनायकम्।
न दूर्वया यज्जेद् दुर्गां बिल्वपत्रै दिवाकरम्।। ***(भट्टी)***
अक्षतास्तु यवाः प्रोक्तारभावे ब्रीहयः स्मृता।
तदभावे च गोधूमा न तु खण्डिततण्डुलाः।। ***(परशुरामः)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**॥२॥ प्रमोदाय—**

**ॐ भूर्भुवः स्वः प्रमोद! इहागच्छ इह तिष्ठ प्रमोदाय नमः प्रमोदमावाह्यामि स्थापयामि।**

**॥३॥ सुमुखाय—**

**ॐ भूर्भुवः स्वः सुमुख! इहागच्छ इह तिष्ठ सुमुखाय नमः सुमुखमावाह्यामि स्थापयामि।**

**॥४॥ दुर्मुखाय—**

**ॐ भूर्भुवः स्वः दुर्मुख! इहागच्छ इह तिष्ठ दुर्मुखाय नमः दुर्मुखमावाह्यामि स्थापयामि।**

**॥५॥ अविघ्नै—**

**ॐ भूर्भुवः स्वः अविघ्न! इहागच्छ इह तिष्ठ अविघ्नै नमः अविघ्नमावाह्यामि स्थापयामि।**

**॥६॥ विघ्नहर्त्रै—**

**ॐ भूर्भुवः स्वः विघ्नहर्ता! इहागच्छ इह तिष्ठ विघ्नहर्त्रै नमः विघ्नहर्ता आवाह्यामि स्थापयामि।**

**मौदश्च प्रमोदश्च सुमुखो दुर्मुखस्तथा।**
**अविघ्नो विघ्नहर्ता च षडेतेविघ्ननायकाः।।**

पुष्पासनादिषोडशोपचारैः पूजनं कुर्यात्।

**प्रार्थना—** **लम्बोदरं परम सुन्दरमेक दन्तम्,**
**पीताम्बरं त्रिनयनं परमं पवित्रम्।**
**उद्यद्दिवाकर निभोज्ज्वल कान्तिकान्तम्,**
**विघ्नेश्वरं सकल विघ्नहरं नमामि।।**

कृतेन अनेन पूजनेन मोदादिषड्विनायकाः प्रीयन्ताम् न मम।

*॥ इति श्रीमोदादिषडविनायकपूजनम् ॥*



# अथ कलशपूजनम्

(गणपति आदि देवताओं के दाहिने ओर गेंहु या सप्तधान्य से अष्टदल बनाकर उसके उपर कलश स्थापित करके कलश की पूजा करें)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**भूमिस्पर्श** (भूमि का स्पर्श करें)—

**ॐमही द्यौः पृथिवी च नऽइमं यज्ञम्मिमिक्षताम्। पिपृतान्नो भरीमभिः।।**

**धान्यप्रक्षेपः** (भूमि पर सप्तधान्य रखें)—

**ॐओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्त ६ राजन्पारयामसि।।**

**कलशस्थापनम्** (सप्तधान्य पर कलश स्थापित करें)—

**ॐआजिघ्र कलशम्मह्या त्त्वा व्विशन्त्विन्दवः। पुनरूर्ज्जा निवर्त्तस्व सा नः सहस्रं धुक्क्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः।।**

**कलशे जलपूर्णम्** (कलश में जल भरें)—

**ॐवरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्त्थो वरुणस्यऽ ऋतसदन्यसि वरुणस्यऽ ऋतसदनमसि वरुणस्यऽ ऋतसदनमासीद।।**

**गन्धं प्रक्षेपः** (कलश में चन्दन या रोली छोड़े)—

**ॐत्वां गन्धर्व्वाऽअखनंस्त्वामिन्द्रस्त्वां बृहस्प्पतिः। त्वामोषधे सोमो राजा व्विद्वान्यक्ष्मादमुच्यत।।**

**धान्यं प्रक्षेपः** (कलश में धान्य छोड़ें)—

**ॐधान्यमसि धिनुहि देवान्प्राणाय त्त्वोदानाय त्त्वा व्यानाय त्त्वा। दीर्घामनु प्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रतिगृभ्णा त्त्वच्छिद्रेण पाणिना चक्षुषे त्त्वा महिनां पयोऽसि।।**

**सर्वोषधीं प्रक्षेपः** (कलश में सर्वोषधी छोड़े)—

**ॐयाऽओषधीः पूर्व्वाजातादेवेब्भ्यस्त्रियुगम्पुरा। मनैनु बब्भ्रूणामह ६ शतन्धामानि सप्त च।।**

**दूर्वाप्रेक्षेपः** (कलश में दूर्वा छोड़े)—

**ॐकाण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्प्परि। एवानो दूर्वे प्रतनुसहस्रेण शतेन च।।**

**पञ्चपल्लवं प्रक्षेपः** (पंचपल्लव कलश के मुख पर सुव्यवस्थित करें)—

**ॐअश्वत्थे वो निषदनम्पर्णे वो व्वसतिष्कृता। गोभाजऽइत्किलासथ यत्त्सनवथ पूरुषम् ।।**

**सप्तमृदां प्रक्षेपः** (कलश में सप्तमृदा छोड़ें)—

**ॐस्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म्म सप्रथाः।।**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**पूगीफलं प्रक्षेपः** (कलश में सुपारी छोड़े )—

**ॐ याः फलिनीर्य्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः। बृहस्पति प्रसूता स्तानो मुञ्चन्त्व ६ हसः।।**

**पञ्चरत्नं प्रक्षेपः** (कलश में पंचरत्न छोड़े)—

**ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे।।**

**मुद्रां प्रक्षेपः** (कलश में मुद्रा छोड़े)—

**ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।**

**रक्तसूत्रेण कण्ठं वेष्ट्येत्**(कलश के कण्ठ पर मोली बांधे)—

**ॐ सुजातो ज्योतिषा सह शर्म्म व्यरूथमा ऽसदत्स्वः। वासोऽअग्ने व्विश्वरूप ६ सं व्ययस्वविभावसो।।**

**कलशोपरिपूर्णपात्रं न्यसेत्**(चावल से भरा ढक्कन कलश पर रखें)—

**ॐ पूर्णादर्व्वि परापत सुपूर्ण्णा पुनरापत। व्वस्नेव व्विक्क्रीणा वहा ऽ इषमूर्ज्ज ६ शतक्क्रतो।।**

**श्रीफलं न्यसेत्**(ढक्कन पर नारियल रखें)—

**श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणिरूपमश्विनौ व्यात्तम्। इष्णन्निषाण मुम्मऽइषाण सर्वलोकम्मऽइषाण।।**

**आवाहनम्**(दाहिने हाथ में पुष्प लेकर आवाहन करें)—

**यजमानः दक्षिणहस्ते पुष्पगन्धाक्षताञ्चादाय—**

**ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो-व्वरुणेह बोद्ध्युरुश ६ समानऽआयुः प्रमोषीः।।**

**रुद्रकलशस्यावाहनम्—**

**ॐ असंख्याता स्रहस्राणि ये रुद्राऽअधिभूम्याम्। तेषा ६ सहस्र-योजनेवधन्वानि तन्मसि।।**

अस्मिन् कलशे वरुणं सांङ्ग सशक्तिं सपरिवारं सायुधमावाहयामि स्थापयामि।

**ॐ अपाम्पत्तये वरुणाय नमः।**

**ध्यानम्**—(यजमान हाथ जोड़कर कलश का ध्यान करें )

**कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।**
**मूले त्वस्यस्थितो ब्रह्मा मध्ये मातृगणाः स्मृता।।**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः।
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा।।
आयान्तु मम शान्त्यर्थं दुरित क्षय कारकाः।
गङ्गे च यमुने चैव गोदावरि सरस्वति।।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् संनिधिं कुरु।
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु मम शान्त्यर्थं दुरित क्षय कारकाः।।

मनोजूतीति मन्त्रस्य प्रतिष्ठापूर्वकं पुष्पासनं, षोडशोपचारैः लब्ध्वोपचारैर्वा पूजनं कृत्वा प्रार्थयेत्।

**प्रार्थना** (हाथ जोड़कर प्रार्थना करें)—

देवदानव संवादे मथ्यमाने महोदधौ।
उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्।।
त्वत्तोये सर्व तीर्थानि देवाः सर्वे त्वयि स्थिताः।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः।।
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः।।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः।
त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव।
सांनिध्यं कुरुमे देव प्रसन्नो भव सर्वदा ।।

नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय।
सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते।।

प्राणिनामाधारभूतज्जगत् वृक्षस्य य ज्जीवनम्,
तीर्थानाममृतस्वरूपहृदयं लोकस्य शङ्कारकम्।
दैत्य देव मथेनयोऽब्धिमध्ये कुम्भेन प्रत्युद्भवः,
सोऽयं शंवितनोतु देववरुणो आगम्य पुण्य मखे।।

अनेन कृतेन पूजनेन वरुणाद्यावाहितदेवताः प्रीयन्तां न मम।

*।। इति वरुणपूजनम् ।।*

---

**तत्र शास्त्रोक्तञ्च—** सर्वत्र पावनी गंगा त्रिषु स्थानेषु दुष्यति।
म्लेच्छस्पर्शे सुराभाण्डे कूपादिजलमिश्रणे।। ***(आचारभूषणे)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

# अथ पुण्याहवाचनम्

**वरुणप्रार्थना** (यजमान हाथ जोड़कर कलश से प्रार्थना करें)—

**ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक।**
**पुण्याहवाचनं यावत्तावत्त्वं सुस्थिरो भव।।**

**गुरुप्रार्थना** (यजमान हाथ जोड़कर ब्राह्मणों से प्रार्थना करें)—

**ॐ गुरुमूलमिदं शास्त्रं गुरुमूलमिदं जगत्।**
**गुरुरेवपरं ब्रह्म गुरुरेव शिवः स्वयं।।**
**ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम्।**
**मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा।।**

**यजमानः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलि शिरस्याधाय अनन्तरं दक्षिणबाहु, बामबाहौ, हृदयानन्तरं भूमि स्थापयेत्।** (यजमान कलश को हाथों में लेकर क्रमशः मस्तक, दक्षिण बाहु, बाम बाहु, हृदय व भूमि के स्पर्श करें)

**तत्र मन्त्र—**

**ॐ त्रीणिपदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्।। तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु।।**

ब्राह्मणाः—ॐ अस्तु दीर्घमायुः।

**यजमानः—ॐ दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च।**
**तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु।।**

इति भवन्तो ब्रुवन्तु।

ब्राह्मणाः—ॐ पुण्यं पुण्याहं दीर्घमायुरस्तु-३।।

**ततः यजमानः कलशं यथास्थाने स्थापयित्वा, पुनर्गृहीत्वा एतेन मन्त्रेण प्रयोगः क्रियायाः त्रिवारं कुर्यात् ।** (यह प्रक्रिया तीन बार दोहराये)

**ततः कर्तोदङ्मुखानां युग्मब्राह्मणानां हस्ते**(यजमान ब्राह्मणों के हाथों में नीचे बतायी गई सामग्री दें)—

---

**शास्त्रोक्तञ्च—** पुण्यऽहनि च संप्राप्ते विवाहे चौलके तथा।
व्रतबन्धे च यज्ञादौ तथा च दानकर्मणि।।
गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा।
नवग्रहमखे शान्तावद्भुतेषु तथैव च।
अन्यस्मिन्नपि सर्वस्मिंछुभे कर्मणि चोदिता।। *(विधानरत्नमाला)*

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**यजमानः—सुप्रोक्षितमस्तु।**

ब्राह्मणाः—अस्तु सुप्रोक्षितम् ।

**यजमानः—ॐअपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्।**
**ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु नः।।**

**शिवा आपः सन्तु।** (जल देवें)

विप्राः—सन्तु शिवा आपः ।

**यजमानः—ॐ लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।**
**सा मे वसतु वै नित्यं सौमनस्यं सदास्तु मे।।**

**सौमनस्यमस्तु।** (पुष्प देवें)

विप्राः—अस्तु सौमनस्यम्।

**यजमानः— ॐअक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम्।**
**यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम।।**

**अक्षतं चारिष्टं चास्तु।** (चावल देवें)

विप्राः—अस्त्वक्षतमरिष्टं च।।

**यजमानः—गन्धाः पान्तु।** (चन्दन देवें)

विप्राः—सौमाङ्गल्यं चास्तु।।

**यजमानः—अक्षताः पान्तु।** (चावल देवें)

विप्राः—आयुष्यमस्तु।।

**यजमानः—पुष्पाणि पान्तु।** (पुष्प देवें)

विप्राः—सौश्रियमस्तु।।

**यजमानः—सफलताम्बूलानि पान्तु।** (सुपारी सहित पान देवें)

विप्राः—ऐश्वर्यमस्तु।।

**यजमानः—दक्षिणाः पान्तु।** (दक्षिणा देवें)

विप्राः—बहु देयं चास्तु।।

**यजमानः—पुनरत्रापः पान्तु।** (पुनः जल देवें)

विप्राः—स्वर्चितमस्तु।।

**ततो यजमानः आचार्यादीनां विप्राणां समक्षे करौबद्ध्वा प्रार्थयेत्—**

(यजमान ब्राह्मणो से हाथ जोड़कर प्रार्थना करें)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**यजमानः—दीर्घमायुः शान्तिः पुष्टिः तुष्टिः श्रीर्यशोविद्याविनयोवित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु।**

(ब्राह्मण, पत्नी सहित यजमान के मस्तक पर जल के छींटें देते हुये बोले)

विप्राः–**दीर्घमायुः शान्तिः पुष्टिः तुष्टि चास्तु ।।**

**ततो यजमानः अक्षतान् गृहीत्वा—**

यजमानः—**यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते, तमहमोंकारमदिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये।**

विप्राः—**वाच्यताम्- ३**

**आशीर्वचनं मन्त्राः—**

**ॐ भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गै स्तुष्टुवा ꣳ सस्तनूभिर्व्यशेमहि देवहितं य्यदायुः।। देवानां भद्रासुमतिर्ऋजूयतान्देवाना ꣳ रातिरभिनो निवर्तताम्। देवाना ꣳ सख्यमुपसेदिमा व्वयं देवानऽआयुः प्रतिरन्तु जीवसे।। उच्चादिविदक्षिणावन्तोऽअस्थुर्येऽ अश्वदाः सहते सूर्येण हिरण्यदाऽ अमृतत्वं भजन्ते वासोदाः सोम प्रतिरन्तु आयुः।।**

**यजमानः पुनरक्षतान् गृहीत्वा—**

**यजमानः—व्रतजपनियमतपः स्वाध्यायक्रतुदयादमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्।**

विप्राः—समाहितमनसः स्मः-३

**यजमानः—प्रसीदन्तु भवन्तः।**

विप्राः—प्रसन्नाः स्मः।।

**ततः यजमानस्य सम्मुखे द्वे पात्रे संस्थाप्य**(यजमान के सामने दो पात्र रखें और उसमें जल छोड़ते जाये)—

**प्रथमपात्रे—**

**ॐशान्तिरस्तु।।** विप्राः - अस्तु।। **ॐपुष्टिरस्तु।। ॐ तुष्टिरस्तु।। ॐ वृद्धिरस्तु।। ॐअविघ्नमस्तु।। ॐआयुष्यमस्तु।। ॐआरोग्यमस्तु।। ॐ शिवमस्तु।। ॐशिवं कर्मास्तु।। ॐकर्मसमृद्धिरस्तु।। ॐवेदसमृद्धिरस्तु।। ॐशास्त्रसमृद्धिरस्तु।। ॐधनधान्यसमृद्धिरस्तु।। ॐपुत्रपौत्रसमृद्धिरस्तु।। ॐइष्टसम्पदस्तु।।**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

द्वितीयपात्रे—ॐअरिष्टनिरसनमस्तु।। ॐयत्पापं यद्रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु।।

पुनः प्रथमपात्रे— ॐयच्छ्रेयस्तदस्तु।। ॐउत्तरे कर्मणिनिर्विघ्नमस्तु।। ॐउत्तरोत्तरा महरभिवृद्धिरस्तु।। ॐउत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्।। ॐतिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु।। ॐतिथिकरण-मुहूर्तनक्षत्रग्रहलग्नाधि देवताः प्रीयन्ताम्।।ॐतिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदैवते प्रीयताम्।।ॐदुर्गापाञ्चाल्यौ प्रीयेताम्।। ॐअग्निपुरोगा-विश्वेदेवाः प्रीयन्ताम्।। ॐइन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्।। ॐवसिष्ठ-पुरोगा एकपत्न्यः प्रीयन्ताम्।। ॐब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्।। ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्।। ॐऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम्।। ॐब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्।। ॐश्रीसरस्वत्यौ प्रीयेताम्।। ॐश्रद्धामेधे प्रीयेताम्।। ॐभगवती कात्यायनी प्रीयताम्।। ॐभगवती माहेश्वरी प्रीयताम्।। ॐभगवती ऋद्धिकरी प्रीयताम्।। ॐभगवती वृद्धिकरी प्रीयताम्।। ॐभगवती पुष्टिकरी प्रीयताम्।। ॐभगवती तुष्टिकरी प्रीयताम्।। ॐभगवन्तौ विघ्नविनायकौ प्रीयेताम्।। ॐसर्वाः कुलदेवताः प्रीयन्ताम्।। ॐसर्वाः ग्रामदेवताः प्रीयन्ताम्।। ॐसर्वाः इष्टदेवताः प्रीयन्ताम्।।

द्वितीयपात्रे—ॐहताश्च ब्रह्मद्विषः।। ॐहताश्च परिपन्थिनः।। ॐहताश्च कर्मणो विघ्नकर्तारः।। ॐशत्रवः पराभवं यान्तु।। ॐशाम्यन्तु घोराणि।। ॐशाम्यन्तु पापानि।। ॐशाम्यन्त्वीतयः।। ॐशाम्यन्तूपद्रवाः।।

पुनः प्रथमपात्रे— ॐशुभानि वर्धन्ताम्।। ॐशिवा आपः सन्तु।। ॐशिवा ऋतवः सन्तु।। ॐशिवा ओषधयः सन्तु।। ॐशिवा वनस्पतयः सन्तु।। ॐशिवा अतिथयः सन्तु।। ॐशिवा अग्नयः सन्तु ।। ॐशिवा आहुतयः सन्तु ।।ॐअहोरात्रे शिवे स्याताम्।।

ॐनिकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।। ॐशुक्राङ्गारकबुधबृहस्पतिशनिश्चरराहुकेतुसोम-सहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्।। ॐभगवान् नारायणः प्रीयताम्।। ॐभगवान् पर्जन्यः प्रीयताम्।। ॐभगवान् स्वामी महासेनः प्रीयताम्।। ॐपुरोऽनुवाक्यया यत्पुण्यं तदस्तु।। ॐयाज्यया यत्पुण्यं तदस्तु।। ॐवषट्कारेण यत्पुण्यं तदस्तु।। ॐप्रातः सूर्योदये यत्पुण्यं तदस्तु।।

ततः—(द्वितीय पात्र को नापित या अन्य किसी व्यक्ति से बाहर फिंकवा दें व

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

प्रथम पात्र को यजमान के मस्तकाऽभिषेक के लिए सुरक्षित रखें)

**ततः यजमानो ब्राह्मणान् साञ्जलि प्रार्थयेत्**(फिर यजमान हाथ जोड़कर ब्राह्मणों से प्रार्थना करे)—

**यजमानः—एतत्कल्याणयुक्तं पुण्यं पुण्यकालान् वाचयिष्ये।**

विप्राः—ॐवाच्यताम्।

**ततः पुनर्यजमानो ब्राह्मणान् साञ्जलि प्रार्थयेत्—**

**यजमानः—**

**ॐब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम्।**
**वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः।।**

**भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणस्य अमुक-कर्मणः पुण्याहं भवन्तो ब्रुवन्तु।**

विप्राः—ॐपुण्याहम्-३

**ॐपुनन्तु मा देवजनाः पुनन्तु मनसा धियः।**
**पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।।**

**यजमानः— ॐपृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्।**
**ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः।।**

**भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणस्य अमुककर्मणः कल्याणं भवन्तो ब्रुवन्तु।**

विप्राः—ॐकल्याणम्-३

**ॐयथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्या ँ शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुपमादो नमतु।।**

**यजमानः— ॐसागरस्य यथा ऋद्धिर्महालक्ष्म्यादिभिः कृता।**
**सम्पूर्णा सुप्रभावा च तामृद्धिञ्च ब्रुवन्तु नः।।**

**भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणस्य अमुककर्मणः ऋद्धिं भवन्तो ब्रुवन्तु।**

विप्राः—ॐऋद्ध्यताम्-३

**ॐसत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम। दिवं पृथिव्या अध्याऽ**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

रुहामाविदाम देवान्त्स्वर्ज्योतिः।।

यजमानः— ॐस्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा।
विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः।।

भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणस्य अमुककर्मणः स्वस्तिं भवन्तो ब्रुवन्तु ।

विप्राः -ॐआयुष्मते स्वस्ति-३

ॐस्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।।

यजमानः— ॐसमुद्रमथनाज्जाता जगदानन्द कारिका।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः।।

अन्याश्च— शिवगौरी विवाहे या या श्रीरामे नृपात्मजे।
धनदस्य गृहे या श्रीरस्माकं सास्तु सद्मनि।।

भो ब्राह्मणाः! मम सकुटुम्बस्य सपरिवारस्य गृहे करिष्यमाणस्य अमुककर्मणः श्रीरस्तु इति भवन्तो ब्रुवन्तु ।

विप्राः -ॐअस्तु श्रीः-३

श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौव्यात्तम्। इष्णन्निषाण मुम्मऽइषाण सर्व लोकम्मऽइषाण।।

ॐमनसः काममाकूतिं वाचः सत्यमशीमहि। पशूना छं रूपमन्नस्य मयि श्रीः श्रयतां यशः।।

यजमानः— ॐप्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्।
भगवांछाश्वतो नित्यं नो वै रक्षतु सर्वतः।।

विप्राः— ॐप्रजापति न त्वदेतान्यन्यो विश्वारूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वय ङ स्याम पतयो रयीणाम्।।

यजमानः— ॐआयुष्मते स्वस्तिमते यजमानाय दाशुषे।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः।।
देवेन्द्रस्य यथास्वस्ति यथास्वस्ति गुरोर्गृहे।
एकलिङ्गे यथास्वस्ति तथास्वस्ति सदा मम।।

विप्राः—आयुष्मते स्वस्ति।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐप्रति पन्थामपद्महि स्वस्तिगामनेहसम्।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु।।

**पुण्याह वाचनसमृद्धिरस्तु।**

**ततः यजमानः पुनः कलशं गृहीत्वा प्रथमपात्रे जलं पातयेत्**(यजमान पुनः ताम्रकलश को लेकर प्रथम पात्र में जल छोड़े)—

**यजमानः—भगवान् प्रजापतिः प्रीयताम्- ३**

**यजमानः** (साञ्जलि) - **अस्मिन् पुण्याह वाचनेन न्यूनातिरिक्तो यो विधि-रुपविष्ट ब्राह्मणानां वचनात् श्रीमहागणपतिप्रसादाच्च परिपूर्णोऽस्तु।**

विप्राः—**अस्तु परिपूर्णः।**

**अथाऽभिषेक—**

**एकस्मिन् ताम्रपात्रे प्रथमपात्रे जलं गृहीत्वाऽविधुरा चत्वारो ब्राह्मणा आम्रदूर्वापल्लवेन् यजमानमभिषिञ्चेयुः।**(प्रथमपात्र के जल को लेकर आम के पत्ते या दूर्वा से यजमान का सपत्नीक व सपरिवार मस्तकाभिषेक करें )

**अभिषेक मन्त्राः—**

**ॐपयः पृथिव्यां पयऽओषधीषुपयो दिव्यन्तरिक्षे पयोधाः। पयस्वती प्रदिशः सन्तुमह्यम्।।**

**ॐपञ्चनद्यः सरस्वतीमपियन्ति सस्त्रोतसः सरस्वती तु पञ्चधा सो देशे भवत्सरित्।।**

**ॐवरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्ज्जनीस्थो वरुणस्यऽ**

---

**शास्त्रोक्तञ्च—** न तत्र कुनखी काणो हीनांगो विकलस्तथा।
क्षयरोगी च कुष्ठी च भयावदन्तोऽभिशापकः।।
वन्ध्यश्च विधुरो वापि क्रूरस्तुखलसेवकः।
बकवृत्तिश्च दम्भीच हेतुकोज्ञान दुर्बलः।।
सहोपपतिरुन्मत्तो व्यसनी सोम विक्रयी।
कन्या गोविक्रयी चैव पिशुनश्चानृतः खलः।।
लोकदुष्टः पराधीनो राजद्रोह परायणः।
वर्ज्या चैतादृशा विप्राः स्वस्ति वाचके सदा।। ***(विप्रवर्ज्या)***

**तत्र शास्त्रोक्तञ्च—** सर्वेषु शुभकार्येषु पत्नी दक्षिणतः शुभा।
अभिषेके विप्रपादप्रक्षालने चैव वामतः।। ***(संस्कारगणपति)***

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐव्रतेन दीक्षामाप्नोति दीक्षयाऽप्नोति दक्षिणाम्। दक्षिणां श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते।।

ॐभूर्भुवः स्वः सत्य! इहागच्छ इह तिष्ठ ॐ सत्याय नमः।

।।७।। भृशाय—(तद्दक्षिणपदद्वये दक्षिणकूर्परे कृष्णवर्णे )

ॐ भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रम्मपश्ये माक्षभिर्यजत्राः। स्थिरैरङ्गै-स्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देव हितं यदायुः।।

ॐ भूर्भुवः स्वः भृश! इहागच्छ इह तिष्ठ ॐ भृशाय नमः।

।।८।। आकाशाय—(तद्दक्षिणैक बाहौ एकपदे कृष्णवर्णे)

ॐ घृतं घृत पावानः पिबत व्वसाम्व्वसापावानः पिबतान्तरिक्षस्य हवि-रसि स्वाहा। दिशः प्रदिशऽआदिशो विदिश ऽउद्दिशो दिग्भ्यः स्वाहा।।

ॐ भूभुर्वः स्वः आकाशमिहागच्छ इह तिष्ठ ॐ आकाशाय नमः।

।।९।। वायो—(तद्दक्षिण आग्नेयकोणे धुम्रवर्णे)

ॐ व्वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि नियुत्वान्त्सोमपीतये।।

ॐ भूभुर्वः स्वः वायुमिहागच्छ इह तिष्ठ ॐ वायव्ये नमः।

।।१०।। पूषणे—(तद्दक्षिण पश्चिमैकपदे दक्षिण मणिबन्धे रक्तवर्णे)

ॐ पूषन्तवव्रते वयन्नरिष्येम कदाचन। स्तोतारस्त ऽइहस्मसि।।

ॐभूभुर्वः स्वः पूषन्तमिहागच्छ इह तिष्ठ ॐ पूषणे नमः।

।।११।। वितथाय—(तदधः दक्षिणपार्श्वे द्विपदे शुक्लवर्णे)

ॐसविता प्रथमे ऽहन्नग्निर्द्वितीये वायुस्तृतीय ऽआदित्य चतुर्थे चन्द्रमाः पञ्चमऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे। मित्रो नवमे वरुणो दशम इन्द्र एकादशे विश्वेदेवा द्वादशे।।

ॐ भूभुर्वः स्वः वितथमिहागच्छ इह तिष्ठ ॐ वितथाय नमः।

।।१२।। गृहक्षताय—(तत्पश्चिम पदद्वये दक्षिणपार्श्वे पीतवर्णे)

ॐगृहमाविभतमावे यध्वमृर्जे बिभ्रत एमसि। ऊर्जे बिभ्रद्वः सुमनाः सुमेधा गृहानैमिमनसा मोदमानः ।।

ॐ भूभुर्वः स्वः गृहक्षतमिहागच्छ इह तिष्ठ ॐ गृहक्षताय नमः।

।।१३।। यमाय—(तदधः पदद्वय दक्षिणोरौ कृष्णवर्णे)

ॐयमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा धर्मः पित्रे।।

ॐभूभुर्वः स्वः यममिहागच्छ इह तिष्ठ ॐ यमाय नमः।

।।१४।। गंधर्वाय—(तत्पश्चिमे पदद्वये दक्षिणजानुप्रदेशे रक्तवर्णे)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐ ऋताषाड् ऋतधामाग्निर्गंधर्वस्तस्यौषधयोप्सरसोमुदोनाम्। स न ऽइदं ब्रह्मक्षत्रं पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा।।**

ॐ भूर्भुवः स्वः गन्धर्व! इहागच्छ इहतिष्ठ ॐ गन्धर्वाय नमः।

**।।१५।। भृङ्गराजाय—(तत्पश्चिम पदद्वये दक्षिणजङ्घायां कृष्णवर्णे)**

**ॐसुपर्णः पार्जन्य ऽआतिर्वाह सोदर्विदाते वायवे बृहस्पतये वाचस्पतये पैङ्गराजोऽलज आन्तरिक्षः प्लवोद्गुर्मत्स्यस्ते नदीपतय द्यावापृथिवीयः कूर्मः।।**

ॐ भूर्भुवः स्वः भृङ्गराज! इहागच्छ इह तिष्ठ ॐ भृङ्गराजाय नमः।

**।।१६।। मृगाय—(तदधः एकपद दक्षिणस्फिचि पीतवर्णे)**

**ॐतद् विष्णोः परमंपद ꣳ सदा पश्यन्ति सूरयः। दिवीय चक्षुराततम्।। त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाब्भ्यः। अतो धर्माणि धारयन्।।**

ॐ भूर्भुवः स्वः मृग! इहागच्छ इह तिष्ठ ॐ मृगाय नमः।

**।।१७।। पितृभ्य—(तदधः नैर्ऋत्यकोणेकपदे पादयोः रक्तवर्णे )**

**ॐपितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेब्भ्यः स्वधायिभ्यः स्वधा नमः प्प्रपितामहेब्भ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽ मीमदन्तं-पितरोऽतीतृपन्त पितरः पितरः शुन्धद्ध्वम्।।**

ॐ भूर्भुवः स्वः पितर! इहागच्छ इह तिष्ठ ॐ पितृभ्यो नमः।

**।।१८।। दौवारिकाय—(तदुत्तरैकपदे वामस्फिचि रक्तवर्णे)**

**ॐ द्रविणोदाः पिपीषति जुहोत प्रतिष्ठत नेष्ट्रा दृतुभिरष्यत।।**

ॐ भूर्भुवः स्वः दौवारिक! इहागच्छ इहतिष्ठ ॐ दौवारिकाय नमः।

**।।१९।। सुग्रीवाय—(तदुत्तरपदोर्ध्वं पदे वामजङ्घायां शुक्लवर्णे)**

**ॐसुषुम्णः सूर्य रश्मि चन्द्रमा गंधर्वस्तस्य नक्षत्राण्यऽप्सरसो भेकुरयो ना। स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा व्वाट् ताभ्यः स्वाहा।।**

ॐ भूर्भुवः स्वः सुग्रीव! इहागच्छ इह तिष्ठ, ॐ सुग्रीवाय नमः।

**।।२०।। पुष्पदन्ताय—(तदुत्तरे पदद्वये वामजानुप्रदेशे रक्तवर्णे)**

**ॐओषधीः प्रतिमोद्दधव्वं पुष्पवती प्रसूवरीः अश्वाऽइवसजित्वरीर्व्वी-रुधः पारयिष्णवः।।**

ॐ भूर्भुवः स्वः पुष्पदन्त! इहागच्छ इह तिष्ठ, ॐ पुष्पदन्ताय नमः।

**।।२१।। वरुणाय—(तदुत्तरे पदद्वये वामूरौ शुक्लवर्णे)**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐतत्वायामि ब्रह्मणावन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेह बोद्ध्युरुश ँ समानऽआयुः प्रमोषीः।।**

ॐभूर्भुवः स्वः वरुण! इहागच्छ इह तिष्ठ ॐ वरुणाय नमः।

**।।२२।। असुराय—(तदुत्तरे पदद्वये वामपार्श्वे पीतवर्णे)**

**ॐये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधयाचरंति। परापुरोनि पुरो ये भरन्त्यग्निष्टाँल्लोकान्प्रणुदात्य स्मात्।।**

ॐभूर्भुवः स्वः असुर! इहागच्छ इह तिष्ठ ॐ असुराय नमः।

**।।२३।। शेषाय—(तदुत्तरे पदद्वये वामपार्श्वे कृष्णवर्णे)**

**ॐ या इषवोनां येवा वनस्पति ँ रनु। येवावटेषु शेरतेतेभ्यः सर्पेभ्यो नमः।।**

ॐभूर्भुवः स्वः शेष! इहागच्छ इह तिष्ठ ॐ शेषाय नमः।

**।।२४।। पापाय—(तदुत्तरे वायव्यकोणैकपदे वाममणिबन्धे पीतवर्णे)**

**ॐ सूर्य रश्मिर्हरिकेशः पुरस्तात् सविता ज्ज्योति रुदयाँऽऽअजस्त्रम्। तस्य पूषा प्रसवे याति विद्वान् सम्पश्यन् विश्वाभुवनानि गोपाः।।**

ॐ भूर्भुवः स्वः पाप! इहागच्छ इह तिष्ठ ॐ पापाय नमः।

**।।२५।। रोगाय—(तदुत्तरे वायव्यकोणैकपदे वामप्रवाहो रक्तवर्णे)**

**ॐशिरोमे श्रीर्यशो मुखंत्विपिः केशाश्च श्मश्रूणि राजामे प्राणो अमृत ँ सम्राट् चक्षुर्विराट् श्रोत्रम्।।**

ॐभूर्भुवः स्वः रोग! इहागच्छ इह तिष्ठ ॐ रोगाय नमः।

**।।२६।। अहये—(तत्प्रागेकपदे वामप्रवाहौ रक्तवर्णे)**

**ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽअन्तरिक्षे ये दिवितेभ्यः सर्प्पेभ्यो नमः।।**

ॐ भूर्भुवः स्वः अहये! इहागच्छ इह तिष्ठ ॐ अहये नमः।

**।।२७।। मुख्याय—(तदूर्ध्व पदद्वये वामकूर्परे रक्तवर्णे)**

**ॐअवतत्य धनुष्ट्व ँ सहस्राक्षशतेषुधे। निशीर्यशल्यानां मुखाशिवो-नः सुमना भवः।।**

ॐ भूर्भुवः स्वः मुख्य! इहागच्छ इह तिष्ठ ॐ मुख्याय नमः।

**।।२८।। भल्लाटाय—(तत्प्राक्पदद्वये वामबाहौ कृष्णवर्णे)**

**ॐबण्महाँ२।। असि सूर्य बडादित्य महाँ२।।असि महस्ते सतोमहिमा पनस्यतेद्धादेव महाँ२।। असि।।**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ भूर्भुवः स्वः भल्लाट! इहागच्छ इह तिष्ठ ॐ भल्लाटाय नमः।

**।।२९।। सोमाय—(तत्प्राक्पदद्वये वामबाहौ कृष्णवर्णे)**

**ॐ सोमो धेनु ꣳ सोमो ऽअर्वन्तमाशु ꣳ सोमो वीरंकर्म्मण्यं ददाति। सादन्यं विदर्थ्य ꣳ सभेयं पितृ श्रवणं योददाश दस्मै।।**

ॐ भूर्भुवः स्वः सोम! इहागच्छ इह तिष्ठ ॐ सोमाय नमः।

**।।३०।। सर्पाय—(तत्प्राक्पदद्वये वामांसे कृष्णवर्णे)**

**ॐउदुत्यं जात वेदसंदेवं वंहन्ति केतवः। दृषेव्विश्वाय सूर्य ꣳ स्वाहा।।**

ॐ भूर्भुवः स्वः सर्प! इहागच्छ इह तिष्ठ ॐ सर्पाय नमः।

**।।३१।। अदितये—(तत्प्राक्पदद्वये वामश्रोत्रे पीतवर्णे)**

**ॐ अदिति द्यौरदितिरंतरिक्षमदितिर्माता सपिता सपुत्रः। विश्वेदेवा-ऽअदितिः पञ्च जनाऽअदितिर्जातमदितिर्जनित्वम्।।**

ॐभूर्भुवः स्वः अदिति! इहागच्छ इह तिष्ठ ॐ अदितये नमः।

**।।३२।। दितये—(तत्प्राक्पदद्वये वामनेत्रे पीतवर्णे)**

**ॐ उतनो ऽहिर्बुध्न्यः श्रृणोत्वज ऽएकपात् पृथिवी समुद्रः। विश्वेदेवा ऋता वृधोहुवानास्तुता मन्त्राः कविशस्ताऽअवन्तु।।**

ॐभूर्भुवः स्वः दिति! इहागच्छ इह तिष्ठ ॐ दितये नमः।

**।।३३।। अदभ्यो—(शिखिपदाधः मुखे शुक्लवर्णे)**

**ॐ आपोऽ अस्मान्मातरः शुन्धयन्तु धृतेनो धृतप्प्वः पुनन्तु। व्विश्व ꣳ हिरिप्रं प्रवहन्ति देवीरुदिदाब्भ्यः शुचिरा पूतऽएमि। दीक्षा तपसोस्तनूरसितान्त्वां शिवा ꣳ शग्मां परिदधं भद्द्रं व्वर्ण पुष्यन्।।**

ॐभूर्भुवः स्वः आप! इहागच्छ इह तिष्ठ ॐ अदभ्यो नमः।

**।।३४।। सावित्राय—(आग्नेयपदाधः कोणे दक्षिणहस्ते शुक्लवर्णे)**

**ॐ उपयाम गृहीतोऽसि सावित्रोऽसि च नोधाश्च नोधाऽअसि च नो मयिधेहि। जिन्वयज्ञं जिन्वयज्ञपतिं भगायदेवाय त्वा सवित्रे।।**

ॐ भूर्भुवः स्वः सावित्र! इहागच्छ इह तिष्ठ ॐ सावित्राय नमः।

**।।३५।। जयाय—(नैर्ऋत्यां पितृपदाधः कोणे शुक्लवर्णे)**

**ॐमर्म्माणि ते वर्मणाच्छादयामि सोमस्त्वा राजामृतेनानुवस्ताम्। उरोर्वरीयो वरुणस्ते कृणोतु जयन्तन्त्वानु देवामदन्तु।।**

ॐ भूर्भुवः स्वः जया! इहागच्छ इहतिष्ठ ॐ जयाय नमः।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।३६।। रुद्राय—(वायव्यां कोणे रोगपदाधः वामहस्ते रक्तवर्णे)

ॐ याते रुद्र शिवातनूर घोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ता भिचाकशीहि।।

ॐ भूर्भुवः स्वः रुद्र! इहागच्छ इह तिष्ठ ॐ रुद्राय नमः।

।।३७।। अर्यम्णे—(ततो मध्यसलग्नो परिस्थित पदत्रय दक्षिणस्तने कृष्णवर्णे)

ॐ अर्य्यमणं बृहस्पतिमिन्द्रं दानाय चोदय। वाचं विष्णु ꣳ सरस्वती ꣳ सवितारं च वाजिन ꣳ स्वाहा।।

ॐ भूर्भुवः स्वः अर्यम्ण! इहागच्छ इह तिष्ठ ॐ अर्यम्णे नमः।

।।३८।। सवित्रे—(तद्दक्षिणाग्नेयकोणे पदे दक्षिणहस्ते रक्तवर्णे)

ॐ विश्वानि देव सवितर्दुरितानि परासुव। यद्‌भद्रं तन्न आसुव।।

ॐ भूर्भुवः स्वः सवित्र! इहागच्छ इहतिष्ठ ॐ सवित्रे नमः।

।।३९।। विवस्वते—(तदधः पश्चिमपदत्रये जठरदक्षिणभागे शुक्लवर्णे)

ॐ विवस्वन्नादित्यैषत सोम पीथस्तस्मिन् मत्स्व श्रदस्मैनरोव्वचसे दधातन यदाशीर्दादंपतीव्वानमम श्रुतः। पुमान्पुत्रो जायतेव्विदते व्वस्वधा व्विश्वाहारपऽ एधते गृहे।।

ॐ भूर्भुवः स्वः विवस्वत! इहागच्छ इह तिष्ठ ॐ विवस्वते नमः।

।।४०।। विबुधाधिपाय—(तत्पश्चिमनैर्ऋत्यकोणपदे वृषणयो रक्तवर्णे)

ॐ इन्द्रऽ आसां नेता बृहस्पतिर्द्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनाना मभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्।।

ॐभूर्भुवः स्वः विबुधाधिप! इहागच्छ इह तिष्ठ ॐविबुधाधिपाय नमः।

।।४१।। मित्राय—(तदुत्तरे पदत्रये जठरवामभागे श्वेतवर्णे)

ॐ तन्मित्रस्य वरुणस्याभिचक्षे सूर्योरूपं कृणुते द्यौ रूपस्थे। अनन्त मन्य द्रुशदस्यपाजः कृष्णमन्य द्धरितः संभरंति।।

ॐ भूर्भुवः स्वः मित्र! इहागच्छ इहतिष्ठ ॐ मित्राय नमः।

।।४२।। राजयक्ष्मणे—(तदुत्तरैकपदे वामहस्ते रक्तवर्णे)

ॐअभिगोत्राणि सहसा गाहमानो ऽदयो वीरः शतमन्युरिन्द्रः दुश्च्यवनः पृतना षाडयुध्यो ऽस्माक ꣳ सेनाअवतु प्रयुत्सु।।

ॐ भूर्भुवः स्वः राजयक्ष्मण! इहागच्छ इह तिष्ठ ॐ राजयक्ष्मणे नमः।

।।४३।। पृथ्वीधराय—(तत्प्राक्पदत्रये वामहस्ते रक्तवर्णे)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐ स्योना पृथिवी नो भवा नृक्षरा निवेशनी यच्छा नः शर्म सप्रथाः।।**

ॐ भूर्भुवः स्वः पृथ्वीधरमिहागच्छ इहतिष्ठ ॐ पृथ्वीधराय नमः।

**।।४४।। आपवत्साय—(तत्प्राक् ईशानकोणपदे उरसि शुक्लवर्णे)**

**ॐ आतेवत्सोमनो यमत्परमाच्चित् सधस्थात् अग्ने त्वां कामयागिरा।।**

ॐ भूर्भुवः स्वः आपवत्स! इहागच्छ इहतिष्ठ ॐ आपवत्साय नमः।

**।।४५।। ब्रह्मणे—(मध्ये नवपदे वास्तोहृदय पीतवर्णे)**

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः।।**

ॐ भूर्भुवः स्वः ब्रह्मा! इहागच्छ इह तिष्ठ ॐ ब्रह्मणे नमः।

**।।४६।। चरक्यै—(मण्डलाद्बहि ईशानकोणेषु धुम्रवर्णे)**

**ॐभावास्यमिद ६ सर्वं यत्किञ्चजगत्यां जगत्। तेनत्यक्तेन भुञ्जीथामा-गृधः कस्यस्विद्धनम्।।**

ॐ भूर्भुवः स्वः चरक! इहागच्छ इहतिष्ठ ॐ चरक्यै नमः।

**।।४७।। विदार्यै—(मण्डलाद्बहिराग्नेयकोणेषु रक्तवर्णे)**

**ॐ अग्निं दूतं पुरोदधे हव्यवाहमुप ब्रुवे। देवाँ२ आ सादयादिह।।**

ॐभूर्भुवः स्वः विदारी! इहागच्छ इहतिष्ठ ॐ विदार्यै नमः।

**।।४८।। पूतनायै—(ततो नैर्ऋत्यां पीतहरितवर्णे)**

**ॐ नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः कुल्याय च सरस्याय च नमो नादेयाय वैशन्ताय च ।।**

ॐ भूर्भुवः स्वः पूतना! इहागच्छ इहतिष्ठ ॐ पूतनायै नमः।

**।।४९।। पापराक्षस्यै—(ततो वायव्यां कोणे कृष्णवर्णे)**

**ॐ वायव्यैर्वायव्यान्याप्नोति सतेन द्रोण कलशं कुम्भीभ्यामम्भृणौ सूते स्थालीभिः स्थालीराप्नोति।।**

ॐ भूर्भुवः स्वः पापराक्षस! इहागच्छ इहतिष्ठ ॐ पापराक्षस्यै नमः।

**।।५०।। स्कंदाय—(ततः मण्डलाद्बहिर्पूर्वे रक्तवर्णे)**

**ॐयत्र बाणाः संपतंति कुमाराविशिखाऽ इव तन्नऽइन्द्रो बृहस्पति रदितिः शर्म्म यच्छतु विश्वाहा शर्म्म यच्छतु।।**

ॐ भूर्भुवः स्वः स्कंद! इहागच्छ इहतिष्ठ ॐ स्कंदाय नमः।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।५१।। अर्यम्णे—(तद्दक्षिणे कृष्णवर्णे)

ॐ अर्यमणं बृहस्पतिमिन्द्रं दानायचोदय वाचं विष्णु ६ सरस्वती ६ं सवितारञ्च ६ वाजिन स्वाहा।।

ॐ भूर्भुवः स्वः अर्यमा! इहागच्छ इहतिष्ठ ॐ अर्यम्णे नमः।

।।५२।। जृम्भकाय—(तत् पश्चिमे रक्तवर्णे)

ॐ सरोभ्यो धैवरमुपस्था वराभ्यो दा शं वैशन्ताभ्यो वैन्दं नड्वलाभ्यः शौष्कलं पारायमार्गारभवारायकैवर्ते आन्दं विषमेभ्यो मैनाल स्वनेस्यः पर्णकं गुहाभ्यः किरात ६ सानुभ्यो जृम्भकं पर्वतेभ्यः किम्पूरुषम्।।

ॐ भूर्भुवः स्वः जृम्भक! इहागच्छ इहतिष्ठ ॐ जृम्भकाय नमः।

।।५३।। पिलिपिच्छाय—(तद्दुत्तरे पीतवर्णे)

ॐ कास्विदासीत्पूर्व्वचितिः कि ६ स्विदासी बृहद्वयः कास्विदासीत् पिलिप्पिला कास्विदासीत्पिशङ्गिला।।

ॐ भूर्भुवः स्वः पिलिपिच्छ! इहागच्छ इहतिष्ठ ॐ पिलिपिच्छाय नमः।

।।५४।। गणेशाय—(पुनः पूर्वे)

ॐगणानां त्वा गणपति ६ हवामहे प्रियाणां त्वा प्रियपति ६ हवामहे निधीनां त्वा निधिपति ६ हवामहे व्वसो मम। आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्।।

ॐ भूर्भुवः स्वः गणपति! इहागच्छ इहतिष्ठ ॐ गणपतये नमः।

।।५५।। दुर्गायै—(ततः दक्षिणे)

ॐ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। सन्नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः।।

ॐ भूर्भुवः स्वः दुर्गा! इहागच्छ इहतिष्ठ ॐ दुर्गायै नमः।

।।५६।। वायव्ये—(ततः पश्चिमे)

ॐ व्वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि नियुत्वान्त्सोमपीतये।।

ॐ भूर्भुवः स्वः वायु! इहागच्छ इहतिष्ठ ॐ वायव्ये नमः।

।।५७।। विभत्साय—(ततः उत्तरे)

ॐअमी वहा वास्तोष्पते विश्वरूपाण्याविशन् सखा सुशेव एधिः नः।।

ॐ भूर्भुवः स्वः विभत्स! इहागच्छ इहतिष्ठ ॐ विभत्साय नमः।

।।५८।। उग्रसेनाय—(पुनः पूर्वे)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐअभित्वा गौत्तमा ऽङ्गिरा जात वेदो विचर्षणे। द्युम्नैरभि प्रणोनुमः।।

ॐ भूर्भुवः स्वः उग्रसेन! इहागच्छ इह तिष्ठ ॐ वायव्ये नमः।

।।५९।। डामराय—(ततो दक्षिणे)

ॐसि ६ ह्यसि स्वाहा सि ६ ह्यस्यादित्य व निः स्वाहा ६ं ह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सि ६ ह्ययसि सुप्रजावनी रायस्पोषवनिः स्वाहा सि ६ ह्यस्यावह देवान् यजमानाय स्वाहा भूतेभ्यस्त्वा।।

ॐ भूर्भुवः स्वः डामर! इहागच्छ इहतिष्ठ ॐ डामराय नमः।

।।६०।। महाकालाय—(ततः पश्चिमे)

ॐ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि। समापो ऽअद्भिरग्मत समोषधीभिरोषधीः।।

ॐ भूर्भुवः स्वः काल! इहागच्छ इहतिष्ठ ॐ कालाय नमः।

।।६१।। अश्विभ्याम्—(ततः उत्तरे)

ॐ यावां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षताम्।।

ॐ भूर्भुवः स्वः अश्विनीकुमार! इहागच्छ इहतिष्ठ ॐ अश्विभ्यां नमः।

।।६२।। इन्द्राय—(पूर्वे)

ॐ त्रातारमिन्द्रमवितारमिन्द्र ६ हवे हवे सुहव शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्र ६ स्वस्ति नो मघवा धात्विन्द्रः।।

ॐ भूर्भुवः स्वः इन्द्र! इहागच्छ इहतिष्ठ ॐ इन्द्राय नमः।

।।६३।। अग्नये—(आग्नेयाम्)

ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२ आ सादयादिह।।

ॐ भूर्भुवः स्वः अग्नि! इहागच्छ इहतिष्ठ ॐ अग्नये नमः।

।।६४।। यमाय—(दक्षिणे)

ॐयमाय त्वा ऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे।।

ॐ भूर्भुवः स्वः यम! इहागच्छ इहतिष्ठ ॐ यमाय नमः।

।।६५।। निर्ऋतये—(नैर्ऋत्याम्)

ॐअसुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्म-दिच्छसात इत्या नमो देवि निर्ऋते तुभ्यमस्तु।।

ॐ भूर्भुवः स्वः निर्ऋति! इहागच्छ इहतिष्ठ ॐ निर्ऋतये नमः।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।६६।। **वरुणाय—(पश्चिमे)**

**ॐतत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेह बोद्ध्युरुश ꣳ समानऽआयुः प्रमोषीः।।**

ॐ भूर्भुवः स्वः वरुण! इहागच्छ इहतिष्ठ ॐ वरुणाय नमः।

।।६७।। **वायो—(वायव्याम्)**

**ॐ आ नो नियुद्भिः शतिनीभिरध्वर ꣳ सहस्त्रिणीभिरुप याहि यज्ञम्। वायो अस्मिन्त्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः।।**

ॐ भूर्भुवः स्वः वायु! इहागच्छ इहतिष्ठ ॐ वायव्ये नमः।

।।६८।। **कुबेराय—(उत्तरे)**

**ॐ व्वय ꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि।।**

ॐ भूर्भुवः स्वः कुबेर! इहागच्छ इह तिष्ठ ॐ कुबेराय नमः।

।।६९।। **ईशानाय—(ऐशान्याम्)**

**ॐ तमीशानं जगतस्तस्थुषस्पतिंधियञ्जिन्व मवसे हूमहे व्वयम्। पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्ध्धः स्वस्तये।।**

ॐ भूर्भुवः स्वः ईशान! इहागच्छ इहतिष्ठ ॐ ईशानाय नमः।

।।७०।। **रुद्रेभ्यो—(ईशान पूर्व मध्ये)**

**ॐ नमस्ते रुद्रमन्यव ऽउतोत ऽइषवे नमः। बहुभ्यां मुतते नमः।।**

ॐभूभुर्वः स्वः एकादशरुद्रः इहागच्छत इहतिष्ठत ॐएकादशरुद्रेभ्यो नमः।

।।७१।। **अनन्ताय—(नैऋत्य पश्चिम मध्ये)**

**ॐस्योना पृथिवी नो भवा नृक्षरानिवेशनी। यच्छा नः शर्म्म सप्प्रथाः।।**

ॐ भूर्भुवः स्वः अनन्त! इहागच्छ इहतिष्ठ ॐ अनन्ताय नमः।

**इत्थं शिख्यादीनावाह्य षोडशोपचारैः सम्पूज्य ।**



## वास्तुशान्ति पूजनम् (सुवर्ण प्रतिमायां)

**मण्डलमध्ये कलशं संस्थाप्य तदुपरि सुवर्णवास्तुप्रतिमां कृकलासरूपां संस्थाप्य। वास्तुमूर्तौ अग्न्युतारणपूर्वकं प्राणप्रतिष्ठां कुर्यात्।**

(वास्तु मण्डल के मध्ये ताम्रकलश संस्थापित करके उसके ऊपर सोने की कृकंल स्वरूप वास्तुमूर्ति स्थापित करके, अग्न्युतारण पूर्वक चलप्राणप्रतिष्ठा करें)

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**आवाहनम्— ॐवास्तोष्पते प्रतिजानीह्यस्मान्त्स्वा वेशोऽअनमीवो भवानः। यत्वेमहे प्रतितन्नो जुषस्वशन्नो भवद्विपदे शं चतुष्पदे।।**

(उपरोक्त मन्त्र से वास्तुदेव का आवाहन करें)

**ॐ आगच्छ भगवन् वास्तो सर्वै देवैरभिष्ठित।**
**भगंवन् कुरु कल्याणं गृहेऽस्मिन् सन्निधिं कुरु।।**

ॐ भूर्भुवः स्वः वास्तोष्पतिमिहागच्छ इह तिष्ठ ॐ वास्तोष्पतये नमः। वास्तोष्पतिमावाहयामि स्थापयामि।।

**ॐ मनोजूतीतिमन्त्रस्य प्रतिष्ठापूर्वकं षोडशोपचारैः पूजनं कुर्यात्।**

(षोडशोपचार से या उपलब्ध सामग्री से पूजा करें)

**अर्घ्यदानम्—**

**ॐ पूज्योऽसि त्रिषु लोकेषु गृहे रक्षार्थं वैप्रभो।**
**त्वद् विना न च सिद्ध्यन्ति यज्ञदानानि सर्वशः।।**
**अयोने भगवन् भर्ग ललाट स्वेद संभव।**
**गृहाणार्घ्यं मयादत्तं वास्तु स्वामिन् नमोस्तुते।।**

विशेषार्घ्यं समर्पयामि।

**करौबध्वा प्रार्थयेत्—**

**वास्तोष्पते नमस्तुभ्यं भूशय्याभिरत प्रभो।**
**मद्गृहं धन धान्यादि समृद्धं कुरु सर्वदा।।**

अनेन पुजनेन वास्तोमण्डलस्थदेवानां पीठोपरि प्रतिष्ठित वरुणः वास्तुपुरुष च प्रीयेताम् न मम।

**पताकास्थापनं पूजनञ्च—** (भवनोपरि संस्थाप्येत्)

।।१।। पूर्व-**बृहद् पञ्चरंगी व पीतध्वजा।**

।।२।। अग्नेयां-**रक्ता।** ।।३।। दक्षिणे-**कृष्णा।**

।।४।। नैऋत्यां-**नीला।** ।।५।। पश्चिमे-**श्वेता।**

।।६।। वायव्यां-**धुम्रा।** ।।७।। उत्तरे-**श्वेता।**

।।८।। ऐशान्यां-**रक्ता।** ।।९।। ईशान पूर्व मध्य-**रक्ता।**

।।१०।। नैऋत्य पश्चिम मध्ये-**रक्त पताका स्थाप्येत् ।**

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन पताका देवाः प्रीयन्ताम् न मम ।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**त्रिसुत्रीवेष्टनं जलधारां प्रपातनं च कुर्यात्। सर्षपलाजाविकर्णं कुर्यात्।**

(जल व दूध की धारा देकर लाजा तथा पीली सरसों बिखेरें)

**वास्तुखनन व प्रतिष्ठापनम्—**

**अग्नेकोणे आकाशपदे जानु परिमितं गर्तं खनित्वा तत्र काष्ठपेटिका मध्ये मृणमय कलशेषु वास्तुमूर्तौ, शैवाल, सप्तधान्य, लाजा, पीतसर्षप, दधि, दूर्वा, पुष्पं च संस्थाप्य तद् गर्ते निधाय जलदुग्धेन गर्तं पूरयेत् खनितया मृत्तिकया गर्तं परिपूर्य गोमयोदकेन उपलिप्य अष्टदलं विधाय सम्पूज्य श्रीफलं सदक्षिणाकं संस्थाप्य करौबध्वा प्रार्थयेत्—**

**ॐ खशैल सागरां भूमिं यथा वहसि मूर्धनि।**
**तथा मां वह कल्याणं सम्पत् संततिभिः सह।।**

**गृहप्रवेश—**

**नूतन भवनेषु प्रवेशः शुभवेलायां प्राक्तन निवासस्थाने गणपत्यादि पूजनं कृत्वा दधिदूर्वा सहितं कलश श्रीफल युक्तं यजमानः हस्तौ धृत्वा सपत्नीकः सपरिवारः कृत वितान** (चन्दवा) **वाद्यादि सहित मङ्गलगीतयुक्तः नूतनभवनद्वार समीपे आगत्य गणेश दक्षिण वाम द्वारशाखा पूजनं व द्वारदेहली पूजनं कृत्वा दक्षिण चरणनिधाय पूर्वकं गृहे प्रविशेत्। हस्तगत कलश धान्यराश्युपरि निधाय कुलदेवता पूजनं कुर्यात्।**



# प्रकोष्ठाधिदेवतापूजनम्

**।।१।। स्थम्भपूजनम्—**

**ॐवास्तोष्पते ध्रुवा स्थूणां सन्नं सौम्यानां द्रप्सोभत्तापुरां शाश्वती ना मिक्षे मुनीनां सखा।।**

ॐ भूर्भुवः स्वः स्थम्भ! इहागच्छ इह तिष्ठ ॐ स्थम्भाय नमः।

**पञ्चोपचारैः लब्ध्योपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन स्थम्भः प्रीयताम् न मम।

**।।२।। दीपकपूजनम्—**

**ॐचन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत्।।**

ॐ भूर्भुवः स्वः दीप! इहागच्छ इहतिष्ठ ॐ दीपाय नमः।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत् ।**

अनेन पूजनेन दीपदेवता: प्रीयताम् न मम।

।।३।। **चुल्ही** (अग्निगंधर्वाभ्याम्) **पूजनम्** —

**ॐ त्वन्नो अग्ने व्वरुणस्य विद्वान् देवस्य हेडो ऽअवया सिसीष्ठाः यजिष्ठोतमः शोशुचानो विश्वा द्वेषा ꣳ सि प्रमुमुग्ध्यस्मत्।।**

ॐ भूर्भुव: स्व: अग्नि! इहागच्छ इह तिष्ठ ॐ अग्नये नम:।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन अग्निगंधर्वा: प्रीयेताम् न मम।

।।४।। **भण्डारगृहे** (कुबेराय) **पूजनम्**—

**ॐ व्वय ꣳ सोम व्रते तव मनस्तनूषु बिभ्रतः। प्रजावन्तः सचेमहि।।**

ॐ भूर्भुव: स्व: कुबेर! इहागच्छ इह तिष्ठ ॐ कुबेराय नम:।

(हल्दी, मजीठ, साबूतधनिया व कमलगट्टा लेकर कुबेर सहित महालक्ष्मी का पूजन करें)

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत् ।**

**प्रार्थना**—

**धनाध्यक्षाय देवाय नरयानोपवेशिने।**
**नमस्ते राजराजाय कुबेराय महात्मने।।**

अनेन पूजनेन कुबेर: प्रीयताम् न मम।

।।५।। **जलस्थाने** (वरुणाय) **पूजनम्**—

**ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेड-मानो व्वरुणेह बोद्ध्युरुश ꣳ समानऽआयुः प्रमोषीः।।**

ॐ भूर्भुव: स्व: वरुण! इहागच्छ इहतिष्ठ ॐ वरुणाय नम:।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन वरुण: प्रीयताम् न मम।

।।६।। **उखलमूसल** (रौद्रपीठाय) **पूजनम्**—

**ॐयमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा धर्मः पित्रे।।**

ॐ भूभुर्व: स्व: रौद्रपीठ! इहागच्छ इहतिष्ठ ॐ रौद्रपीठाय नम:।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत् ।**

अनेन पूजनेन रौद्रपीठः प्रीयताम् न मम।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।७।। **शयनकक्षे** (कामदेवाय) **पूजनम्—**

**ॐ इड ऽएह्यादित ऽएहि काम्या ऽएत। मयि वः कामधरणं भूयात्।**

ॐ भूर्भुवः स्वः कामदेव! इहागच्छ इहतिष्ठ ॐ कामदेवाय नमः।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन कामदेवः प्रीयताम् न मम ।

।।८।। **छत्रे** (पुन्नागाय) **पूजनम्—**

**ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये ऽअन्तरिक्षे ये दिवितेभ्यः सर्प्पेभ्यो नमः।।**

ॐ भूर्भुवः स्वः पुन्नाग! इहागच्छ इहतिष्ठ ॐ पुन्नागाय नमः।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन पुन्नागः प्रीयताम् न मम।

।।९।। **गृहाङ्गणे** (क्षेत्रपालाय) **पूजनम्—**

**ॐ न हि स्पशमविदन्नन्यमस्माद् वैश्वानरात्पुर ऽएतारमग्नेः एमेनम वृधन्नमृता ऽअमृर्त्त्यं वैश्वानरं क्षैत्र जित्याय देवाः।।**

ॐ भूर्भुवः स्वः क्षेत्रपाल! इहागच्छ इहतिष्ठ ॐ क्षेत्रपालाय नमः।

**पञ्चोपचारैः लब्धोपचारैर्वा सम्पूजयेत्।**

अनेन पूजनेन क्षेत्रपालः प्रीयताम् न मम।

*।। इति वास्तोप्रतिष्ठा ।।*



# अथ चतुःषष्टियोगिनीपूजनम्

**मण्डलप्रारूपानुसारेण रक्तवस्त्रोपरि चतुःषष्ठकोष्ठकानि कृत्वा तदुपरि रक्त-पीत-हरित वा अष्टदलं कृत्वा पूर्वादि क्रमेण आवाहनं कुर्यात्।**

(साधारणतया अगर मण्डल न बनावें तो षोडशमातृकामण्डल पर भी आवाहन कर सकते हैं, योगिनीयों के साथ महाकाली, महालक्ष्मी, महासरस्वती का आवाहन करें। मण्डल के मध्य में ताम्रकलश की स्थापना व पूजा करें।)

**ततः यजमान हस्ते रक्तपुष्पाक्षताञ्चादाय—**

**तत्र मन्त्र—**

।।क।। **महाकाल्यै (मण्डलमध्य कलशोपरि)—**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ खड्गं चक्रगदेषुचापपरिघाञ्छूलं भुशुण्डीं शिरः,
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम्।
नीलाश्मद्युतिमास्यपाददशकां सेवे महाकालिकाम्,
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम्।।

ॐ भूर्भुव: स्व: महाकाल्यै नम: महाकालिमावाहयामि स्थापयामि।

।।ख।। महालक्ष्म्यै (मण्डल मध्य कलशोपरि)—

ॐ घण्टाशूलहलानि शङ्खमुसलेचक्रं धनुः सायकं,
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशुतुल्यप्रभाम्।
गौरीदेहसमुद्भवां त्रिजगतामाधारभूतां महा-
पूर्वामत्र सरस्वतीमनु भजे शुम्भादिदैत्यार्दिनीम्।।

ॐ भूर्भुव: स्व: महालक्ष्म्यै नम: महालक्ष्मीमावाहयामि स्थापयामि।

।।ग।। महासरस्वत्यै (मण्डल मध्य कलशोपरि)—

ॐ विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां,
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे।।

ॐ भूर्भुव: स्व: महासरस्वत्यै नम: महासरस्वतीमावाहयामि स्थापयामि।

।।१।। गजाननायै—

ॐ तमीशानं जगतस्तस्थुषस्पतिञ्धियञ्जिन्वमवसे हूमहे व्वयम्। पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्ध्धः स्वस्तये।।

ॐ भूर्भुव: स्व: गजाननायै नम: गजाननामावाहयामि स्थापयामि।

।।२।। सिंहमुख्यै—

ॐआब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर ऽइषव्व्यो ऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।।

ॐ भूर्भुव: स्व:सिंहमुख्यैनम: सिंहमुखीमावाहयामि स्थापयामि।

।।३।। गृध्रास्यायै—

ॐ महाँ ऽइन्द्रो य ओजसा पर्जन्यो वृष्टि माँ ऽइव। स्तोमैर्वत्सस्य वावृधे। उपयाम गृहीतो ऽसि महेन्द्रायत्वेषतेयानिर्महेन्द्राय त्वा।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ भूर्भुवः स्वः गृध्रास्यायैनमः गृध्रास्यामावाहयामि स्थापयामि।

**।।४।। काकतुण्डिकायै—**

**ॐ सद्योजातो व्यमिमीत यज्ञमग्निर्देवानाम भवत्पुरोगाः। अस्य होतुः प्रदिश्य तस्य वाचि स्वाहा कृत हविरदन्तु देवाः।।**

ॐ भूर्भुवः स्वः काकतुण्डिकायै नमः काकतुण्डिकामावाहयामि स्थापयामि।

**।।५।। उष्ट्रग्रीवायै—**

**ॐ आदित्यं गर्भं पयसा समङ्ग्धि सहस्त्रस्य प्रतिमां विश्वरूपम्। परि-वृङ्धि हरसा माभिम ६ स्थाः शतायुषं कृणुहि चीयमानः।।**

ॐ भूर्भुवः स्वः उष्ट्रग्रीवायै नमः उष्ट्रग्रीवामावाहयामि स्थापयामि।

**।।६।। हयग्रीवायै—**

**ॐ स्वर्ण घर्म्मः स्वाहा स्वर्णार्कः स्वाहा स्वर्ण शुक्रः स्वाहा स्वर्ण ज्योतिः स्वाहा स्वर्ण सूर्य्यः स्वाहा।।**

ॐ भूर्भुवः स्वः हयग्रीवायै नमः हयग्रीवामावाहयामि स्थापयामि।

**।।७।। वाराह्यै—**

**ॐसत्यञ्च मे श्रद्धा च मे जगच्च मे धनञ्च मे विश्वञ्च मे महश्च मे क्रीड़ा च मे मोदश्च मे जातञ्च मे जनिष्यमाणञ्च मे सूक्तञ्च मे सुकृतञ्च मे यज्ञेन कल्पन्ताम्।।**

ॐ भूर्भुवः स्वः वाराह्यै नमः वाराहिमावाहयामि स्थापयामि।

**।।८।। शरभाननायै—**

**ॐभायै दार्वाहारं प्रभाया अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितार ६ सर्वेभ्यो लोकेभ्यः उपसेक्तारं व ऋत्यै वधायोपमन्थितारं मेधाय वासः पल्पूलीं प्रकामाय रजयित्रीम्।।**

ॐ भूर्भुवः स्वः शरभाननायै नमः शरभाननामावाहयामि स्थापयामि।

**।।९।। उलूकिकायै—**

**ॐ जिह्वा मे भद्रं वाङ्महोमनोमन्युः स्वराड् भामः मोदाः प्रमोदा ऽ अङ्गुलीरङ्गानि मित्रं मे सहः।।**

ॐ भूर्भुवः स्वः उलूकिकायै नमः उलूकिकामावाहयामि स्थापयामि।

**।।१०।। शिवारावायै—**

**ॐहिङ्काराय स्वाहा हिंकृताय स्वाहा क्रन्दते स्वाहा वक्रन्दाय स्वाहा**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**प्रोथते स्वाहा प्रपोथाय स्वाहा गंधाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहा सीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा स ६ हानाय स्वाहोपस्थिताय स्वाहायनाय स्वाहा प्रायणाय स्वाहा।।**

ॐ भूर्भुवः स्वः शिवारावायै नमः शिवारावामावाहयामि स्थापयामि।

**।।११।। मयूर्यै—**

**ॐ अग्निश्च मे घर्म्मश्च मे ऽर्कश्च मे सूर्यश्च मे प्राणश्च मे ऽश्वमेघश्च मे पृथिवी च मे ऽदितिश्च मे दितिश्च मे द्यौश्च मे ऽङ्गुलयः शक्क्वरयोदिशश्च मे यज्ञेनकल्पन्ताम्।।**

ॐ भूर्भुवः स्वः मयूर्यै नमः मयूरिमावाहयामि स्थापयामि।

**।।१२।। विकटाननायै—**

**ॐ पूषन्तवव्रते वयन्नरिष्येम कदाचन। स्तोतारस्त ऽइहस्मसि।।**

ॐ भूर्भुवः स्वः विकटाननायै नमः विकटाननामावाहयामि स्थापयामि।

**।।१३।। अष्टवक्त्रायै—**

**ॐवैद्यावेदिः समाप्यते बर्हिषा बर्हिरिन्द्रियम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना ।।**

ॐ भूर्भुवः स्वः अष्टवक्त्रायै नमः अष्टवक्त्रामावाहयामि स्थापयामि।

**।।१४।। कोटराक्ष्यै—**

**ॐअयमग्निः सहस्त्रिणो वाजस्य शतिनस्पतिः। मूर्धा कवी रयीणाम्।।**

ॐ भूर्भुवः स्वः कोटराक्ष्यै नमः कोटराक्षसीमावाहयामि स्थापयामि।

**।।१५।। कुब्जायै—**

**ॐ इयं मे वरुण श्रुधी हवमधा च मृडय। त्वामवस्युराचके।।**

ॐ भूर्भुवः स्वःकुब्जायै नमः कुब्जामावाहयामि स्थापयामि।।

**।।१६।। विकटलोचनायै—**

**ॐयमाय त्वा सूर्यस्य त्वा तपसे। देवस्त्वा सविता मध्वानक्तु पृथिव्याः स ६ स्पृशस्पहि। अर्चिरसि शोचिरसि तपोऽसि।।**

ॐ भूर्भुवः स्वः विकटलोचनायै नमः विकटलोचनामावाहयामि स्थापयामि।

**।।१७।। शुष्कोदर्यै—**

**ॐ यमेम दत्तं त्रित एनमायुनमिन्द्र एणं प्रथम अध्यतिष्ठत्। गंधर्वो अस्य रशनाम गृब्भणात्सूराद वं वसवो निरतष्ठ।।**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ भूर्भुव: स्व: शुष्कोदर्यै नम: शुष्कोदरीमावाहयामि स्थापयामि।

**।।१८।। लल्लजिह्वायै—**

**ॐ मित्रस्य चर्षणी धृतोऽवो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमम्।।**

ॐ भूर्भुव: स्व: लल्लजिह्वायै नम: लल्लजिह्वामावाहयामि स्थापयामि।

**।। १९।। अश्वदंष्ट्रायै—**

**ॐ अग्ने ब्रह्मगृब्भ्णीस्व धरुणमस्तरिक्षं दृ छं ह ब्रह्मवनि त्वा क्षवनि सजात वन्युपदघामि भ्रातृव्यस्य वधाय। विश्वाम्यस्त्वाशाब्भ्य ऽउपदधामि चित्तस्थोर्ध्वचितो भृगूणामङ्गिरसां तपसा तप्यद्ध्वम्।।**

ॐ भूर्भुव: स्व: अश्वदंष्ट्रायै नम: अश्वदंष्ट्रामावाहयामि स्थापयामि।

**।।२०।। वानराननायै—**

**ॐ भग प्प्रणेतर्भग सत्यराधो भगेमां धियमुदवाददन्नः। भगप्प्रणो जनय गोभिरश्वैब्भर्ग प्रन्नृभिर्नृवन्तः स्याम।।**

ॐ भूर्भुव: स्व: वानराननामिहागच्छ इह तिष्ठ ॐवानराननायै नम:।

**।।२१।। ऋक्षाक्ष्यै—**

**ॐ सुपर्णोऽसि गुरुत्मान् पृष्ठे पृथिव्याः सीद। भासान्तरिक्षमापृण ज्योतिषा दिवमुत्तमान तेजसा दिश उद्दृ छं ह।।**

ॐ भूर्भुव: स्व: ऋक्षाक्ष्यै नम: ऋक्षाक्षीमावाहयामि स्थापयामि।

**।।२२।। केकराक्ष्यै—**

**ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेब्भ्यः स्वधायिभ्यः स्वधा नमः प्प्रपितामहेब्भ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्तं पितरो तीतृपन्त पितरः पितरशुंधध्वम्।।**

ॐ भूर्भुव: स्व: केकराक्ष्यै नम: केकराक्षीमावाहयामि स्थापयामि।

**।।२३।। बृहतुण्डायै—**

**ॐ या ते रुद्र शिवा तनूरघोरा ऽपापकाशिनी। तया नस्तन्वा शन्तमया गरिशन्ता भिचाकशीहि।।**

ॐ भूर्भुव: स्व: बृहतुण्डायै नम: बृहतुण्डामावाहयामि स्थापयामि।

**।।२४।। सुराप्रियायै—**

**ॐवरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः। करतान्न सुराषधसः।।**

ॐ भूर्भुव: स्व: सुराप्रियायै नम: सुराप्रियामावाहयामि स्थापयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।२५।। कपालहस्तायै—

ॐह ᳪ सः सुचिषद्वसुरन्तरिक्ष सद्होता वेदिषदतिथिर्दुरोणसत्। नृषद्व रस दृत सद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्।।

ॐ भूभुर्वः स्वः कपालहस्तायै नमः कपालहस्तामावाहयामि स्थापयामि।

।।२६।। रक्ताक्ष्यै—

ॐ सुसन्दृशं त्वा वयं मघवन्वन्दिषी महि। प्रनूनं पूर्णबन्धुरस्तुतो यासिवशां ऽअनु योजान्विद्रते हरि।।

ॐ भूर्भुवः स्वः रक्ताक्ष्यै नमः रक्ताक्षीमावाहयामि स्थापयामि।

।।२७।। शुक्यै—

ॐ देवीरापो अपान्नपाद्यो ऊमिर्हविष्य इन्द्रियावान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग्यस्थ स्वाहा।।

ॐ भूर्भुवः स्वः शुक्यै नमः शुकीमावाहयामि स्थापयामि।

।।२८।। श्येन्यै—

ॐ प्रतिपदसि प्रतिपदे त्वानुपदस्यनुपदे त्वा संपदे त्वा तेजोऽसि तेजसे त्वा त्रिवृदसि।।

ॐ भूर्भुवः स्वः श्येन्यै नमः श्यैनिमावाहयामि स्थापयामि।

।।२९।। कपोतिकायै—

ॐद्वारो देवीरन्वस्य विश्वेव्रता ददन्ते अग्नेः। तुरु व्यचसो धाम्ना पत्यमानाः।।

ॐ भूर्भुवः स्वः कपोतिकायै नमः कपोतिकामावाहयामि स्थापयामि।

।।३०।। पाशहस्तायै—

ॐदेवस्य त्वा सवितुः प्रसवेऽशिवनोर्बाहुभ्यां पूष्णो हस्ताभ्यां। आददे नारिरसि।।

ॐ भूर्भुवः स्वः पाशहस्तायै नमः पाशहस्तामावाहयामि स्थापयामि।

।।३१।। दण्डहस्तायै—

ॐ भुयो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवोभिः। दिवि मूर्द्धानं दधिषे स्वर्षा जिह्वामग्ने च कृषे हव्यवाहम्।।

ॐ भूर्भुवः स्वः दण्डहस्तायै नमः दण्डहस्तामावाहयामि स्थापयामि।

।।३२।। प्रचण्डायै—

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐ कदाचन स्तरीरसि नेन्द स चसि दाशुषे। उपोपेन्नु मघवन्भूयः इन्नुते दानन्देवस्य पृच्यत आदित्येभ्यस्त्वा।।**

ॐ भूर्भुवः स्वः प्रचण्डायै नमः प्रचण्डामावाहयामि स्थापयामि।

**।।३३।। चण्डविक्रमायै—**

**ॐ भद्रङ्कर्णेभिः श्रृणुयामदेवा भद्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गै स्तुष्टुवा छं सस्तनूभिर्व्यशेमहि देवहितं य्यदायुः।।**

ॐ भूर्भुवः स्वः चण्डविक्रमायै नमः चण्डविक्रमामावाहयामि स्थापयामि।

**।।३४।। शिशुघ्न्यै-**

**ॐइषे त्वोर्जे त्वा वायवस्थं देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागं प्रजवतीरनमीवा अयक्ष्मा मा वस्तेन ईशत माघ श ६ सो ध्रुवा अस्मिन् गोपतौस्यात् बह्वीर्यजमानस्य पशून् पाहि।।**

ॐ भूर्भुवः स्वः शिशुघ्न्यै नमः शिशुघ्नीमावाहयामि स्थापयामि।

**।।३५।। पापहन्त्रै—**

**ॐदेवी द्यावा पृथिवी मखस्य वामद्यशिरो राध्यासं देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे।।**

ॐ भूभुर्वः स्वः पापंहन्त्रै नमः पापहन्त्रीमावाहयामि स्थापयामि।।

**।।३६।। काल्यै—**

**ॐ व्विश्वानि देव सवितर्दुरितानि परासुव। यद्भद्रन्तन्नऽआसुव।।**

ॐ भूर्भुवः स्वः काल्यै नमः कालिमावाहयामि स्थापयामि।।

**।।३७।। रुधिरपायिन्यै—**

**ॐअसुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्म-दिच्छसात इत्या नमो देवि निर्ऋते तुभ्यमस्तु।।**

ॐ भूर्भुवः स्वः रुधिरपान्यै नमः रुधिरपायिनिमावाहयामि स्थापयामि।

**।।३८।। वशाधयायै—**

**ॐ अग्निश्च मे घर्म्मश्च मे ऽर्कश्च मे सूर्यश्च मे प्राणश्च मे ऽश्वमेघश्च मे पृथिवीच मे ऽदितिश्च मे दितिश्च मे द्यौश्च मे ऽङ्गुलयः शक्क्वरयो दिशश्च मे यज्ञेनकल्पन्ताम्।।**

ॐ भूर्भुवः स्वः वशाधयायै नमः वशाधामावाहयामि स्थापयामि।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।३९।। **गर्भभक्षायै—**

**ॐबह्वीनां पिताबहुरस्य पुत्रश्चिश्चा कृणोति समनाबगत्य। इषुधि सङ्काः पृतनाश्च सर्वाः पृष्ठ्ठे निनिब्द्धो जयति प्प्रसूतः।।**

ॐ भूर्भुवः स्वः गर्भभक्षायै नमः गर्भभक्षामावाहयामि स्थापयामि।

।।४०।। **शवहस्तायै—**

**ॐ नमस्ते रुद्रमन्यव ऽउतोत ऽइषवे नमः। बाहुभ्यां मुतते नमः।।**

ॐ भूर्भुवः स्वः शवहस्तायै नमः शवहस्तामावाहयामि स्थापयामि।

।।४१।। **आन्त्रमालिन्यै—**

**ॐऋतञ्च मे ऽमृतञ्च मे यक्ष्मञ्च मे नामयच्च मे जीवातुश्च मे दीर्घायुत्वञ्च मे नमित्रञ्च मे भयञ्च मे सुखञ्च मे शयनञ्च मे सूषाश्च मे सुदिनञ्च मे यज्ञेनकल्पन्ताम्।।**

ॐ भूर्भुवः स्वः आन्त्रमालिन्यै नमः आन्त्रमालिनीमावाहयामि स्थापयामि।

।।४२।। **स्थूलकेश्यै—**

**ॐते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे। अप शत्रून्विध्यता ꣳ सविदाने आर्त्नीं इमे विस्फुरन्ती अमित्रान्।।**

ॐ भूर्भुवः स्वः स्थूलकेश्यै नमः स्थूलकेशीमावाहयामि स्थापयामि।

।।४३।। **बृहत्कुक्ष्यै—**

**ॐवेद्या वेदिः समाप्यते बर्हिषा बर्हिरिन्द्रयम्। यूपेन यूप आप्यते प्रणीतो अग्निरग्निना।।**

ॐ भूर्भुवः स्वः बृहत्कुक्ष्यै नमः बृहत्कुक्षीमावाहयामि स्थापयामि।

।।४४।। **शर्पास्यायै—**

**ॐपावका नः सरस्वती व्वाजेभिर्व्वाजिनीवती। यज्ञं व्वष्टुधियावसुः।।**

ॐ भूर्भुवः स्वः शर्पास्यायै नमः शर्पास्यामावाहयामि स्थापयामि।

।।४५।। **प्रेतवाहिन्यै—**

**ॐ अस्कन्नमद्य देवभ्यः आज्य ꣳ संभ्रिया समङ्घ्रिणा विष्णो मा त्वावक्रमिष वसुमतीमग्ने तेच्छायामुपस्थेषां विष्णोः इस्थानमासीत इन्द्रो वीर्यमकृणोदूर्ध्वो ऽध्वरास्त्थात्।।**

ॐ भूर्भुवः स्वः प्रेतवाहिन्यै नमः प्रेतवाहिनीमावाहयामि स्थापयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।४६।। दन्तशूककरायै—

ॐ ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे। अप शत्रून्विध्यता ꣳ सविदाने आर्त्नी इमे विस्फुरन्ती अमित्रान्।।

ॐ भूर्भुव: स्व: दन्तशूककरायै नम: दन्तशूककरामावाहयामि स्थापयामि।

।।४७।। क्रौंच्यै—

ॐमही द्यौः पृथिवी च नऽइमं य्यज्ञम्मिमिक्षताम्। पिपृतान्नो भरीमभिः।।

ॐ भूर्भुव: स्व: क्रौंच्यै नम: क्रौंचीमावाहयामि स्थापयामि।।

।।४८।। मृगशीर्षायै—

ॐ उपयाम गृहीतोऽसि सावित्रोऽअसि च नो मयिधेहि। जिन्वयज्ञपतिं भगायदेवाय त्वा सवित्रे।।

ॐ भूर्भुव: स्व: मृगशीर्षायै नम: मृगशीर्षामावाहयामि स्थापयामि।।

।।४९।। वृषाननायै—

ॐआप्यायस्व समेतुते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे।।

ॐ भूर्भुव: स्व: वृषाननायै नम: वृषाननामावाहयामि स्थापयामि।

।।५०।। व्यात्तास्यायै—

ॐ कार्षिरसि समुद्रस्य त्वा क्षित्या उन्नयामि। समापो ऽअद्भिरग्मत समोषधीभिरोषधीः।।

ॐ भूर्भुव: स्व: व्याप्तास्यायै नम: व्याप्तास्यामावाहयामि स्थापयामि।

।।५१।। धूमनिश्वासायै—

ॐत्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात्।।

ॐ भूर्भुव: स्व: धूमनिश्वासायै नम: धूमनिश्वासामावाहयामि स्थापयामि।

।।५२।। व्योमैकचरणोर्ध्वदृशे—

श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणिरूपमश्विनौ व्यात्तम्। इष्णन्निषाण मुम्मऽइषाण सर्वलोकम्मऽइषाण।।

ॐ भूर्भुव: स्व: व्योमैकचरणोर्ध्वदृशे नम: व्योमैकचरणोर्ध्वदृशीमावाहयामि स्थापयामि।

।।५३।। तापिन्यै—

ॐविष्णोरराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुऽसि। वैष्णवमसि विष्णवे त्वा।।

ॐ भूर्भुव: स्व: तापिन्यै नम: तापिनीमावाहयामि स्थापयामि।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।५४।। शोषणीदृष्ट्यै—

ॐ ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषि मार्षेय ꣳ सुधातु दक्षिणम्। अस्मद्राता देवत्रागच्छत प्रदातारमाविशत्।।

ॐ भूर्भुवः स्वः शोषणीदृष्ट्यै नमः शोषणींदृष्टिमावाहयामि स्थापयामि।

।।५५।। कोटर्यै—

ॐआनोभद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरितासऽउद्भिदः देवा नो यथा सदमिद्वृधेऽअसन्नप्प्रयुवो रक्षितारो दिवे दिवे।।

ॐ भूर्भुवः स्वः कोटर्यै नमः कोटरिमावाहयामि स्थापयामि।

।।५६।। स्थूलनासिकायै—

ॐ नाभिं यज्ञाना सदनं रयीणां महामाहावममिसं नवन्तं। वैश्वानरं रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ।।

ॐ भूर्भुवः स्वः स्थूलनासिकायै नमः स्थूलनासिकामावाहयामि स्थापयामि।

।।५७।। विद्युत्प्रभायै—

ॐ ब्रह्माणिमे मतयः श ꣳ सुतासः शुष्म इयर्ति प्रभृतो मे अद्रिः। आशासते प्रतिहर्यन्त्युक्थेमा हरोवहतस्ता नो अच्छ।।

ॐ भूर्भुवः स्वः विद्युत्प्रभायै नमः विद्युत्प्रभामावाहयामि स्थापयामि।

।।५८।। बलाकास्यायै—

ॐ असंख्याता सहस्त्रणि ये रुद्रा अधिभूम्याम्। तेषा ꣳ सहस्त्र योजने-ऽवधन्वानि तन्मसि।।

ॐ भूर्भुवः स्वः बलाकास्यायै नमः बलाकास्यामावाहयामि स्थापयामि।

।।५९।। मार्जार्यै—

ॐ सुपर्णोऽसि गुरुत्यांस्त्रिवृत्ते शिगायत्रं चक्षु बृहथन्तरे पक्षै। स्तोम आत्मा छन्दा ꣳ स्यङ्गानि यजू ꣳ षिनाम्। सामतो तनूर्वाम देव्यं यज्ञाः यज्ञियं पुच्छंधिष्ण्याः सफा सुपर्णो गुरुत्मान्दिवं गच्छ स्वः पत।।

ॐ भूर्भुवः स्वः मार्जार्यै नमः मार्जारिमावाहयामि स्थापयामि।

।।६०।। कटपूतनायै—

ॐ या ते रुद्र शिवा तनूरघोराऽपापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ता भिचाकशीहि।।

ॐ भूर्भुवः स्वः कटपूतनायै नमः कटपूतनामावाहयामि स्थापयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

।।६१।। अट्टाटहासायै—

ॐ देवी द्यावा पृथिवी मखस्य वामद्यशिरो राध्या सं देव यजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे।।

ॐ भूर्भुवः स्वः अट्टाटहासयै नमः अट्टाटहासामावाहयामि स्थापयामि।

।।६२।। कामाक्ष्यै—

ॐइदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य पा ँ सुरे स्वाहा।।

ॐ भूर्भुवः स्वः कामाक्ष्यै नमः कामाक्षीमावाहयामि स्थापयामि।

।।६३।। मृगाक्ष्यै—

ॐवृष्ण ऊर्मिरसि राष्ट्रदाराष्ट्रं मे स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदाराष्ट्र ममुष्यै देहि वृषसेनोसि राष्ट्रदाराष्ट्रम्मे देहि स्वाहा। वृषसे नोऽसि राष्ट्रदा राष्ट्रममुष्यै।।

ॐ भूर्भुवः स्वः मृगाक्ष्यै नमः मृगाक्षीमावाहयामि स्थापयामि।

।।६४।। मृगलोचनायै—

ॐभायै दार्वाहारं प्रभाया अग्न्येधं व्रधनस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिष्टारं देवलोकाय पेशितारं मनुष्य लोकाय प्रकरितार सर्वेभ्यो लोकेभ्यो उपसेक्तारमव ऋत्यै वधायोपमन्थितारं मेधाय वासः पल्पूली प्रकामाय रजयित्रीम्।।

ॐ भूर्भुवः स्वः मृगलोचनायै नमः मृगलोचनामावाहयामि स्थापयामि।

आवाहनम्— ॐजातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। सन्नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः।।

प्रतिष्ठापनम्—ॐमनोजूतीतिमन्त्रस्य प्रतिष्ठापूर्वकं पुष्पासनं समर्पयामि। षोडशोपचारैः पूजनञ्च बलिदानं कुर्यात्।

ततः पीठोपरि वरुणपूजनं कुर्यात्।(षोडशोपचार से या उपलब्ध सामग्री से पूजा करें)

श्रीफलअर्पणम् (यजमानपत्नी हस्तौ अखण्डश्रीफलसौभाग्यद्रव्यञ्चादाय)—

ॐ रूपं देहि जयं देहि भाग्यं भगवति देहि मे।
पुत्रान् देहि धनं देहि सर्वान् कामान् प्रयच्छ मे।।

(सिन्दूरादि सौभाग्य द्रव्य सहित नारियल अर्पण करें )

प्रार्थना—

दिव्यादि सर्व योगिन्यां दुर्गा रूपाश्च ताः स्मृताः।
पूजया बलिदानेन सन्तुष्टा सन्तु मे सदा।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**रोगानशेषान पहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्।**
**त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति।।**

अनेन पूजनेन चतु:षष्टियोगिन्य: प्रीयन्ताम् न मम।

*।। इति चतु:षष्टियोगिनीपूजनम् ।।*



# अथ एकोनपञ्चाशत्क्षेत्रपालपूजनम्

**मण्डलप्रारूपानुसारेण श्वेत वा कृष्णवस्त्रोपरि एकोनपञ्चाशत कोष्ठकानि कृत्वा तद्दुपरि कृष्ण-पीत-हरित-श्वेताक्षता कोष्ठका पूरित पूर्वादिक्रमेण आवाहनं कुर्यात्। ततः यजमान हस्ते पुष्पाक्षताञ्चादाय—**

तत्र मन्त्र—

**।।क।। क्षेत्रपालाय (मण्डल मध्य कलशोपरि)—**

**ॐ क्षां क्षीं क्षौं क्षं क्षः क्षेत्रपालाय नमःॐ क्षेत्रस्य योनिरसि क्षत्रस्य नाभिरसि मात्वाहि ꣳ सीन्मा हि ꣳ सीः।।**

ॐ भूर्भुव: स्व: क्षेत्रपालाय नम: क्षेत्रपालमावाहयामिस्थापयामि।

**।।१।। अजराय—**

**ॐ इमौ ते पक्षा वजरौपतत्रिणौ याभ्या ꣳ रक्षा ꣳ स्यपह ꣳ स्यग्ने। ताभ्यां पतेम सुकृतामुलोकं यत्रऋषयो जग्मुः प्रथमजाः पुराणाः।।**

ॐ भूर्भुव: स्व: अजराय नम: अजरमावाहयामिस्थापयामि।

**।।२।। व्यापकाय—**

**ॐ प्रथमावा ꣳ सारथिना सुवर्णौ देवौ पश्यन्तौ भुवनानि विश्वा। अपि प्रयंचोदना वामिमाना होतारा ज्योतिः प्रदिशा दिशन्ता।।**

ॐ भूर्भुव: स्व: व्यापकाय नम: व्यापकमावाहयामिस्थापयामि।

**।।३।। इन्द्रचौराय—**

**ॐ इद्रस्यवज्राऽसि वाजसास्त्वयायं वाज ꣳ सेत्। वाजस्यनु प्रसवे मातरम्महि मदितिन्नाम वचसा करामहे। यस्यामिदं विश्वम्भुवनमाविवेशतस्यानौ देवः सविता धर्म साविषत्।।**

ॐ भूर्भुव: स्व: इन्द्रचौराय नम: इन्द्रचौरमावाहयामिस्थापयामि।

**।।४।। इन्द्रमूर्तये—**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐ एवेदिन्द्रम् वृषणं वज्र बाहुं वसिष्ठासो ऽअभ्यर्चन्त्यर्कैः। सनस्तुतो वीर वद्धातु गोमद्यूयम्पात स्वस्तिभिः सदानः।।**

ॐ भूर्भुवः स्वः इन्द्रमूर्तये नमः इन्द्रमूर्तिमावाहयामिस्थापयामि।

**।।५।। उक्ष्णे—**

**ॐ उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश। मद्धये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ।।**

ॐ भूर्भुवः स्वः उक्ष्णे नमः उक्ष्णमावाहयामिस्थापयामि।

**।।६।। कूष्माण्डाय—**

**ॐयद्देवाः देवहेडनन्देवा सश्च कृमावयम्। अग्निर्मातस्मादेन सोविश्वान् मुञ्चत्व ६ हसः।।**

ॐ भूर्भुवः स्वः कूष्माण्डाय नमः कूष्माण्डमावाहयामिस्थापयामि।

**।।७।। वरुणाय—**

**ॐ स न इन्द्रायज्ज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परिस्रव।।**

ॐ भूर्भुवः स्वः वरुणाय नमः वरुणमावाहयामिस्थापयामि।

**।।८।। बटुकाय—**

**ॐ बाहु मे बलमिन्द्रिय ६ हस्तौ मे कर्म्मवीर्यम्। आत्क्माक्षत्रमुरोमम।।**

ॐ भूर्भुवः स्वः बटुकाय नमः बटुकमावाहयामिस्थापयामि।

**।।९।। विमुक्ताय—**

**ॐमुञ्चन्तु मा शपत्थ्यदथो वरुण्यादुत।. अथोयमस्य पड्वी शात्सर्वस्माद्देव किल्विषात्।।**

ॐ भूर्भुवः स्वः विमुक्ताय नमः विमुक्तमावाहयामिस्थापयामि।

**।।१०।। लिप्तकाय—**

**ॐ कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ६ समाः। एवन्त्वयिनान्यथेतोस्तिन कर्मलिप्यतेनरे।।**

ॐ भूर्भुवः स्वः लिप्तकाय नमः लिप्तकमावाहयामिस्थापयामि।

**।।११।। नीललोकाय—**

**ॐ सन्नः सिन्धुरवभृथायोद्यतः समुद्रोभ्य वह्वियमाणः सलिलः प्रप्लुतोय योरोजसास्कभितारजा ६ सिवीर्ये भिर्वीरतमा शविष्ठा। या पत्येते अप्रतीता सहोभिर्विष्णू ऽअगन्वरुणा पूर्वहूतौ।।**

ॐ भूर्भुवः स्वः नीललोकाय नमः नीललोकमावाहयामिस्थापयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**।।१२।। एकदंष्ट्राय—**

**ॐ नमो गणेभ्यो गणपतिभ्यश्च्वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च्वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च्वो नमो नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो नमः।।**

ॐ भूर्भुवः स्वः एकदंष्ट्राय नमः एकदंष्ट्रमावाहयामिस्थापयामि।

**।।१३।। ऐरावताय—**

**ॐ अर्मेभ्यो हस्ति पंजवाया वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसे जपालमिरायैकीना शङ्कीलालाय सुराकारं भद्राय गृहप ६ श्रेयसे वित्तध माद्ध्यक्षा यानुक्षत्तारम्।।**

ॐ भूर्भुवः स्वः ऐरावताय नमः ऐरावतमावाहयामिस्थापयामि।

**।।१४।। औषधीघ्नाय—**

**ॐओषधीः प्रतिमोद्ध्वं पुष्पवतीः प्रसूवरीः। अश्वा ऽइव सजित्वरी-र्वीरुधः पारयिष्णवः।।**

ॐ भूर्भुवः स्वः औषधीघ्नाय नमः औषधीघ्नमावाहयामिस्थापयामि।

**।।१५।। बन्धनाय—**

**ॐत्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनं उर्वारुकमिव बन्धनान्मृत्योर्म्मु-क्षीयमामृतात्।।**

ॐ भूर्भुवः स्वः बन्धनाय नमः बन्धनमावाहयामिस्थापयामि।

**।।१६।। दिव्यकराय—**

**ॐदेवसवितरेषते सोमस्त ६ रक्षस्वमात्वादभन्। एतत्वन्देव सोमदेवो देवाँ २ उपागा इदमहं मनुष्यांत्सहरायस्पोषेण स्वाहा निर्वरुणस्य पाशान्मुच्ये।।**

ॐ भूर्भुवः स्वः दिव्यकराय नमः दिव्यकरमावाहयामिस्थापयामि।

**।।१७।। कम्बलाय—**

**ॐ सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञ ६ सविता सरस्वतीन्द्रस्य रूपवरुणोभिषज्यन्।।**

ॐ भूर्भुवः स्वः कम्बलाय नमः कम्बलमावाहयामिस्थापयामि।

**।।१८।। भीषणाय—**

**ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्। संक्रन्दनो निमिष एकवीर शत ६ सेना अजयत्साकमिन्द्रः।।**

ॐ भूर्भुवः स्वः भीषणाय नमः भीषणमावाहयामिस्थापयामि।।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**।।१९।। गवयाय—**

**ॐ इम सहस्र ६ शतधारमुत्संव्यच्यमान ६ सरिरस्यमध्ये। धृतन्दुहानाम-दितिञ्जना याग्नेमाहि ६ सीः परमे व्योमन्।।**

ॐ भूर्भुवः स्वः गवयाय नमः गवयमावाहयामिस्थापयामि।

**।।२०।। घण्टाय—**

**ॐ कुम्भोविनिष्ठुर्जनिता शचीभिर्यस्मिन् ऽग्नेयोन्याङ्गर्भोऽअंतः। ल्पाशिर्व्यक्तः शतधार उत्सोदुहेन कंभी स्वधां पितृभ्यः।।**

ॐ भूर्भुवः स्वः घण्टाय नमः घण्टमावाहयामिस्थापयामि।

**।।२१।। व्यालाय—**

**ॐ आक्रन्दय बलमोजोन आधानिष्ठ निहि दुरिता बाधमानः। अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व।।**

ॐ भूर्भुवः स्वः व्यालाय नमः व्यालमावाहयामिस्थापयामि।

**।।२२।। अंशवे—**

**ॐइन्द्रा याहि चित्रभानो सुता ऽइमेत्वायवः। अण्वीभिस्तना पूतासः।।**

ॐ भूर्भुवः स्वः अंशवे नमः अंशवमावाहयामिस्थापयामि।

**।।२३।। चन्द्रवारुणाय—**

**ॐचन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि। रयिं पिशंगम्बहुलं पुरुस्पृह ६ हरिरेति कनिक्रदत्।।**

ॐ भूर्भुवः स्वः चन्द्रवारुणाय नमः चन्द्रवारुणमावाहयामिस्थापयामि।

**।।२४।। घटाटोपाय—**

**ॐगणानां त्वा गणपति ६ हवामहे प्रियाणां त्वा प्रियपति ६ हवामहे निधीनां त्वा निधिपति ६ हवामहे व्वसो मम। आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधम्।।**

ॐ भूर्भुवः स्वः घटाटोपाय नमः घटाटोपमावाहयामिस्थापयामि।

**।।२५।। जटिलाय—**

**ॐ उग्रं लोहितेन मित्र ६ सौव्रत्येन रुद्रन्दौव्रत्येनेन्द्रं प्रक्क्रीड़ेन मरुतो बलेन साद्ध्यान् प्प्रमुदा। भवस्य कण्ठ्य ६ रुद्रस्यान्तः पार्श्व्यमहादेवस्य य कृच्छर्व्वस्य वनिष्ठुः पशुपतेः पुरीतत्।।**

ॐ भूर्भुवः स्वः जटिलाय नमः जटिलमावाहयामिस्थापयामि।

**।।२६।। क्रतवे—**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

**ॐ पवित्रेण पुनीहिमा शुक्रेण देव दीद्यत्। अग्ने कृत्वा क्रतूँरनू।।**

ॐ भूर्भुवः स्वः क्रतवे नमः क्रतवमावाहयामिस्थापयामि।

**।।२७।। घण्टेश्वराय—**

**ॐआजिघ्र कलशं मह्या त्त्वा व्विशन्त्विन्दवः। पुनररुर्ज्जा निवर्त्तस्व सा नः सहस्त्रं धुक्क्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः।।**

ॐ भूर्भुवः स्वः घण्टेश्वराय नमः घण्टेश्वरमावाहयामिस्थापयामि।

**।।२८।। विकटाय—**

**ॐ वायोशुक्रो अयामिते मद्धो अग्रदिष्टिषु। आयाहि सोमपीतये स्पार्हो देवनियुत्वता।।**

ॐ भूर्भुवः स्वः विकटाय नमः विकटमावाहयामिस्थापयामि।

**।।२९।। मणिमानाय—**

**ॐ देव्या होतारा भिषजेन्द्रण सयुजायुजा। जगतीच्छन्द इन्द्रिय मनड्वां गौर्वयोदधुः।।**

ॐ भूर्भुवः स्वः मणिमानाय नमः मणिमानमावाहयामिस्थापयामि।

**।।३०।। गणबन्धनाय—**

**ॐत्रीणि त आहुः दिविबन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे। उतवमे वरुणच्छन्त्स्यर्वन्य त्रातआहुः परमं जनित्रम्।।**

ॐ भूर्भुवः स्वः गणबन्धनाय नमः गणबन्धनमावाहयामिस्थापयामि।

**।।३१।। मुण्डाय—**

**ॐ सि ६ ह्यासि स्वाहा सि ६ ह्यस्यादित्यवनिः स्वाहा सि ६ हयसि ब्रह्मवनिः क्षत्रवनिः स्वाहा सि ६ ह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा सि ६ ह्यस्यावह देवान्यजमानाय स्वाहा भूतेभ्यस्त्वा।।**

ॐ भूर्भुवः स्वः मुण्डाय नमः मुण्डमावाहयामिस्थापयामि।

**।।३२।। ढुण्ढिकरणाय—**

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्य्यजत्राः। स्थिरैरङ्गै स्तुष्टुवा ६ सस्तनूभिर्व्व्यशेमहि देवहितं य्यदायुः।।**

ॐ भूर्भुवः स्वः ढुण्ढिकरणाय नमः ढुण्ढिकरणमावाहयामिस्थापयामि।

**।।३३।। स्थविराय—**

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

ॐ अपां फेनेन नमुचेः शिर इन्द्रोदवर्त्तयः विश्वायद जयस्पृधः।।

ॐ भूर्भुवः स्वः स्थविराय नमः स्थविरमावाहयामिस्थापयामि।

।।३४।। वैनाय—

ॐ सुपर्णो वस्ते मृगोअस्यादन्तोगोभिः सन्नद्धा पततिप्रसूता। यत्रानरः संचविचद्र वन्तितत्रास्मभ्यमिषवः शर्मय ६ सन्।।

ॐ भूर्भुवः स्वः वैनाय नमः वैनमावाहयामिस्थापयामि।

।।३५।। धनदाय—

ॐ इद ६ हविः प्प्रजननम्मे ऽअस्तु दशवीर ६ सर्व्वगण ६ स्वस्तये। आत्मसनि प्प्रजासनि पशुसनि लोकसन्न्य भयशंनिः अग्निः प्रजाम्बहुलम्मे करोत्वन्नम्पयोरेतो ऽ अस्मासुधत्त।।

ॐ भूर्भुवः स्वः धनदाय नमः धनदमावाहयामिस्थापयामि।

।।३६।। नागकर्णाय—

ॐ खड़गौ विश्वदेवः श्श्वाकृष्णः कण्णोंगर्द्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सि ६ होमारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः।।

ॐ भूर्भुवः स्वः नागकर्णाय नमः नागकर्णमावाहयामिस्थापयामि।

।।३७।। महाबलाय—

ॐमृगो न भीमः कुचरो गिरिष्ठाः परावत ऽआजगन्था परस्याः। सृक ६ स शाय पविमिन्द्र तिग्मं शत्रून ताड्ढिविमृधो नूदस्व।।

ॐ भूर्भुवः स्वः महाबलाय नमः महाबलमावाहयामिस्थापयामि।

।।३८।। फेत्काराय—

ॐ इन्दुर्दक्षः श्यनऽऋता वाहिरण्य पक्षः शकुनो भुरण्यः। महांत्सध-स्थेद्धुव आनिषतो नमस्ते अस्तु मा माहि ६ सीः।।

ॐ भूर्भुवः स्वः फेत्काराय नमः फेत्कारमावाहयामिस्थापयामि।

।।३९।। चित्काराय—

ॐ चित्रन्देवानामुदगादनीकञ्चक्षुः मित्रस्य वरुणस्याग्नेः। आप्राद्यावा पृथिवी अंतरिक्ष ६ सूर्य आत्क्माजगतस्तस्त्थुषश्चः।।

ॐ भूर्भुवः स्वः चित्काराय नमः चित्कारमावाहयामिस्थापयामि।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. Digitized by eGangotri

